# पाठ्य–पुस्तक–निर्माण–समितिः

**पुस्तकम्** – व्याकरणकौमुदी (प्रथमो भागः)
कक्षा–9 (प्रवेशिका)


**संयोजकः** – डॉ. महावीरप्रसाद सारस्वतः, (प्रो. व्याकरणशास्त्रम्)
श्रीगंगा–शार्दूल–राजकीय–आचार्य–संस्कृत–महाविद्यालयः, बीकानेरम्

**लेखकः** – 1. डॉ. राजेन्द्रप्रसाद भट्टः, (प्राचार्यः)
राजकीय–शास्त्री–संस्कृत–महाविद्यालयः, पीठम् (डूंगरपुरम्)

## पाठ्यक्रम–निर्माण–समितिः

संस्कृतवाङ्मयादर्शः (प्रथमो भागः)
कनिष्ठोपाध्याय-कक्षायै स्वीकृतं पाठ्यपुस्तकम्

संयोजक– श्री विमल कुमार जैन (आई.ए.एस.)
निदेशक संस्कृत शिक्षा, राजस्थान, जयपुर

सदस्य–

1. श्री बहादुर सिंह गुर्जर
सहायक–निदेशक, संस्कृत–शिक्षा, राजस्थान, जयपुर

2. डॉ. नाथूलाल सुमन, पूर्व–संयुक्तसचिव
उच्च–शिक्षा, शासन–सचिवालय, जयपुर

3. श्री योगेन्द्र धामा, व्याख्याता
राजकीय महाविद्यालय, अलवर

4. डॉ. हरिसिंह राजपुरोहित, व्याख्याता,
राजकीय महाविद्यालय, ओसियां, जोधपुर

5. श्री हरिओम गौतम
संभागीय–संस्कृत–शिक्षाधिकारी, भरतपुर–संभाग, भरतपुर

6. श्री रामावतार सिंह, प्रधानाध्यापक,
राजकीय आदर्श प्रवेशिका संस्कृत विद्यालय, धौलपुर

7. श्री प्रदीप कुमार भट्ट, प्रधानाध्यापक,
राजकीय आदर्श प्रवेशिका संस्कृत विद्यालय, डूंगरपुर

8. श्री महेशचन्द्र शर्मा, प्राध्यापक
राजकीय वरिष्ठ उपाध्याय संस्कृत विद्यालय
कुण्डगेट सावर, अजमेर

## – प्रास्ताविकम् –

सर्वशास्त्रोपयोगि व्याकरणशास्त्रम्। संस्कृतभाषायां पाणिनीयं व्याकरणं सर्वातिशायि वर्तते इति सर्वेषामैकमत्यम्। व्याकरणं हि वेदाङ्गेषु मुख्यतमं मुखस्थानीयं वर्तते 'मुखं व्याकरणं स्मृतम्' इति। तत्र पाणिनीयव्याकरणमेव लौकिकानां वैदिकानाञ्च उभयविधशब्दानां व्युत्पादकत्वात् वेदाङ्गत्वं भजते। पाणिनिसूत्राणि आधारीकृत्य लिखितैः कात्यायनवार्तिकैः महर्षेः पतञ्जलेः महाभाष्येण च संवलितमिदं त्रिमुनिव्याकरणम् इत्युच्यते। व्याकरणस्यैव अपरं नाम 'शब्दानुशासनम्' वर्तते, यतो हि शब्दविषयकमनुशासनमेवास्य साक्षात् प्रयोजनम्। अतः व्याकरणस्य महत्त्वं भाषायाम् असन्दिग्धम्। बहुकालं यावत् अष्टाध्यायीक्रमानुसारं व्याकरणस्याध्ययनमध्यापनं प्राचलत् सम्प्रत्यपि चलति। तत्र परम्परायामेव भट्टोजिदीक्षितः यथाप्रसङ्गं, यथावश्यकतं पाणिनेः सूत्राणां क्रमं परिवृत्य, तेषां वृत्तिं विलिख्य, उदाहरणानि च प्रस्तुत्य 'वैयाकरणसिद्धान्तकौमुदी' इति नामानं प्रक्रियाग्रन्थं रचितवान्। अयं अभिनवः पन्थाः आसीत्, आदृतश्च पदवाक्यप्रमाणप्रमाणैः विद्वद्भिः। वरदराजाचार्यः तमेव ग्रन्थं संक्षिप्य 'मध्यसिद्धान्तकौमुदी' रूपेण व्यलिखत्। तत्रापि सुकुमारमतीनां बालानां सारल्येन पाणिनीयव्याकरणे प्रवेशो यथा स्यात् तथा कर्तुं वरदराजः ''लघुसिद्धान्तकौमुदी'' इति ग्रन्थं कृतवान्। इमं च 'लघुकौमुदी' ग्रन्थं 'व्याकरणप्रवेशद्वारम्' इत्यभिधातुं शक्यते।

यद्यप्यत्र लघुसिद्धान्तकौमुद्यां नास्त्यतिकाठिन्यं तथापि बालानामुपकाराय सरहस्यमवगत्यर्थं सरलं व्याख्यानं टिप्पणं वा अपेक्ष्यत एव। अतः राजस्थानमाध्यमिकशिक्षामण्डलस्यानुरोधेन प्रवेशिकाप्रथमवर्षकक्षायाः छात्राणां कृते व्याकरणप्रश्नपत्राय यथापाठ्यक्रमं पञ्चसन्धिपर्यन्तं छात्राणां स्तरानुकूलं संस्कृते टीकनं कृतमावाभ्याम्। अत्र आवश्यकानां पारिभाषिकशब्दानां व्याकरणस्य वैयाकरणानाञ्चापि परिचयः प्रदत्तः। वैयाकरणसिद्धान्तकौमुदीगतानां कारकप्रकरणसम्बद्धानां सप्तविंशतिसूत्राणामपि अत्र पुस्तके सटिप्पणं सम्पादनं कृतमस्ति। प्रतिपृष्ठमङ्कितरेखातः उपरि ग्रन्थस्य मूलरूपम् अधोभागे च व्याख्यानमस्ति इति ज्ञेयम्। संस्कृतसंभाषणे लेखने अनुवादे च छात्राणां गतिर्भवेदेतदर्थं राजस्थानमाध्यमिकशिक्षामण्डलस्यादेशेन एच.आर. विश्वासेन लिखितम् –'अभ्यासपुस्तकम्' अपि अत्र यथास्वरूपं मुद्रापितमस्ति। तदर्थं शिक्षामण्डलपक्षतः विश्वासाय कृतज्ञतां ज्ञापयावः। पुस्तकमिदं शिक्षकाणां शिक्षार्थिनाञ्च करकमलयोः समर्पयन्तौ वाञ्छावः यदनेन तेषां कश्चनापि उपकारः भवति चेत् कृतार्थौ आत्मानौ मंस्यावहे। अत्र पुस्तके मुद्रणजाताः दृष्टिदोषजन्याः प्रमादजाश्च अशुद्धयः अपि सम्भवाः, ताः मानवस्वभावजाः इति मत्वा क्षन्तव्याः बुधैः, सूचनीयाश्च आगामिन्यवसरे अपाकर्तुमिति।

**विद्वद्विधेयौ**

डॉ. महावीरप्रसाद सारस्वतः
डॉ. राजेन्द्रप्रसाद भट्टः

## संस्कृतम् ( व्याकरणम् ) : प्रथम पत्रम्
## (प्रवेशिका परीक्षा)
### ( व्याकरण-शास्त्रम् )

पूर्णाङ्का: 100

| बिन्दव: | विषय-वस्तु | अङ्का: |
|---|---|---|
| 1 | व्याकरणशास्त्रस्य परिचय:, अध्ययनस्य उद्देश्यम्, प्रमुखा: वैयाकरणा: तेषां कृतयश्च। पाणिनि:, कात्यायन:, पतञ्जलि:। | 4 |
| 2 | सूत्रस्य लक्षणं तद्भेदाश्च, व्याख्यानस्य लक्षणं तद्भेदाश्च। | 4 |
| 3 | व्याकरणशास्त्रस्य पारिभाषिक-शब्दा:- उपदेश:, आगम:, आदेश:, लकार:, अनुनासिक:, अननुनासिक:, समास:, सन्धि:, उपधा, गण:। | 4 |
| 4 | लघुसिद्धान्त-कौमुदी (संज्ञा-प्रकरणम्) माहेश्वर-सूत्राणि, प्रत्याहार:, इत्-लोप-उदात्त-अनुदात्त-स्वरित-सवर्ण-प्रत्यय-संहिता-संयोग-पदसंज्ञानां ज्ञानम्, उच्चारणस्थानानि, आभ्यन्तर-बाह्य-प्रयत्ना:। | 8 |
| 5 | अच्संधिगत-प्रयोगसिद्धि: सूत्रार्थश्च। | 20 |
| 6 | हल्संधिगत-प्रयोगसिद्धि: सूत्रार्थश्च। | 15 |
| 7 | विसर्गसंधिगत-प्रयोगसिद्धि: सूत्रार्थश्च। | 5 |
| 8 | कारक-प्रकरणम् निर्धारितसूत्राणि ( अष्टाविंशति:) | 15 |

(1) प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे प्रथमा
(2) सम्बोधने च
(3) कर्तुरीप्सिततमं कर्म
(4) कर्मणि द्वितीया
(5) अकथितं च
(6) अधिशीङ्स्थासां कर्म
(7) उपान्वध्याङ्वस:
(8) लक्षणेत्थम्भूताख्यान-भाग-वीप्सासु प्रतिपर्यनव:
(9) कालाध्वनोरत्यन्तसंयोगे
(10) साधकतमं करणम्
(11) कर्तृकरणयोस्तृतीया
(12) सह-युक्तेऽप्रधाने
(13) येनाङ्गविकार:
(14) इत्थंभूतलक्षणे
(15) हेतौ
(16) कर्मणा यमभिप्रैति स सम्प्रदानम्
(17) चतुर्थी सम्प्रदाने
(18) वा. तादर्थ्ये चतुर्थी वाच्या
(19) नम: स्वस्ति-स्वाहास्वधाऽलंवषड्योगाच्च
(20) ध्रुवमपायेऽपादानम्

(21) अपादाने पञ्चमी
(22) जनिकर्तुः प्रकृतिः
(23) षष्ठी शेषे
(24) कर्तृकर्मणोः कृति
(25) आधारोऽधिकरणम्
(26) सप्तम्यधिकरणे च
(27) षष्ठी चानादरे
(28) यतश्च निर्धारणम्

| 9 | अभ्यासपुस्तकम्–सम्भाषणाय विविधाव्ययादिशब्दानां ज्ञानम् | 25 |
|---|---|---|

**निर्धारित पुस्तकम् – व्याकरण कौमुदी ( प्रथमो भागः )**

# विषय–सूची


| | | |
|---|---|---|
| 1. | विषयप्रवेशः | 1–7 |
| 2. | संज्ञाप्रकरणम् | 9–18 |
| 3. | अच्सन्धिः | 19–40 |
| 4. | हल्सन्धिः | 41–58 |
| 5. | विसर्गसन्धिः | 59–66 |
| 6. | प्रयोगार्थाः | 67–71 |
| 7. | कारकप्रकरणम् | 72–88 |
| 8. | अभ्यासपुस्तकम् | 89–157 |
| 9. | कठिनशब्दानाम् अर्थाः | 158–159 |

# विषय - प्रवेशः

## व्याकरणशास्त्रस्य परिचयः

सर्वे मानवव्यवहाराः वाङ्मूलकाः सन्ति। यदि अत्र वाक् नाभविष्यत्, कस्यापि जनस्य मनोगता भावाः विचाराः अभिव्यक्ताः एव नाभविष्यन्। अतः वाचः भाषायाः वा महत्त्वं सर्वैः एव स्वीक्रियते। भाषा शब्दः वा ज्योतिः अस्ति। यथा उक्तं दण्डिना –

**इदमन्धतमं कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥**

संसारस्य मानवानां ज्ञातिरूपसमुदायेषु भिन्नाः भिन्नाः भाषाः सन्ति। तासु सर्वासु भाषासु संस्कृतभाषा स्वकीयं विशिष्टं स्थानं धत्ते, यतो हि सर्वास्वपि संस्कृतिषु समृद्धतमायाः प्राचीनतमायाः मानवधर्मप्रबोधिकायाः भारतीयायाः संस्कृतेः आधारभूताः वेदाः वैदिकग्रन्थाश्च संस्कृतभाषायामेव निबद्धाः सन्ति। विना संस्कृतभाषाध्ययनं न हि वैदिकं ज्ञानं विज्ञानञ्च ज्ञातुं शक्यम्। किञ्च वेदानां ज्ञानार्थं वेदाङ्गानां ज्ञानम् आवश्यकम। वेदाङ्गानि च शिक्षा, व्याकरणं, छन्दः, निरुक्तं, ज्योतिषं, कल्पश्च इति षट्। तत्र व्याकरणं मुखस्थानीयत्वेन प्राधान्यं भजते – 'मुखं व्याकरणं स्मृतम्' इति शिक्षावचनात्। प्रधाने कृतः यत्नः फलवान् भवति, अतः वेदाङ्गेषु प्रधाने व्याकरणे कृतः यत्नः वेदार्थज्ञानाय एव कल्पते इति। इत्थं व्याकरणस्य महत्त्वं विस्मर्तुं न शक्यते।

***व्याकरणशब्दस्य व्युत्पत्तिः-***

व्याक्रियन्ते व्युत्पाद्यन्ते साधुशब्दाः पृथक्क्रियन्ते असाधुशब्देभ्यः येन, तत् व्याकरणं नाम शब्दसाधुत्व प्रतिपादकं शास्त्रम्। सन्ति भाषायां साधुशब्दाः असाधुशब्दाश्च प्रयुज्यमानाः, तत्र साधुशब्दाः हि यथार्थम् अर्थम् अवबोधयन्ति, असाधुशब्दा स्तु न। विपूर्वकाद् आङ्पूर्वकाच्च करणार्थकात् कृञ् धातोः करणे अर्थे ल्युट्प्रत्ययेन ('करणाधिकरणयोश्च' इति सूत्रेण) व्याकरणशब्दस्य व्युत्पत्तिः भवति।

व्याकरणं हि द्विविधं – लौकिकं वैदिकञ्च। वेदविषयकं वैदिकं व्याकरणम्, तच्च 'प्रातिशाख्यम्' इति नाम्ना मिलति। भाषाविषयकं व्याकरणन्तु लौकिकम्। बहूनि व्याकरणानि श्रूयन्ते, तद्यथा –

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्॥ इति**

एषु सर्वेषु व्याकरणेषु पाणिनेः व्याकरणमेव सर्वातिशायि वर्तते, सर्वाङ्गपूर्णत्वात् वैज्ञानिकशैलीमत्त्वाच्च। अनेके हि पौर्वात्याः पाश्चात्त्याश्च समीक्षणपटवो विद्वांस पाणिनीयतन्त्रं प्राशंसन्। पाणिनीयव्याकरणशास्त्रस्य आधारभूता रचना 'अष्टाध्यायी' नाम्ना उपलभ्यते। अत्र ३९९८ सूत्राणि अष्टसु अध्यायेषु विभक्तानि सन्ति। तत्र प्रत्यध्यायं चत्वारः पादाः वर्तन्ते, प्रतिपादं च नैकानि सूत्राणि।

एषु पाणिनीयसूत्रेषु कात्यायनः वररुचिर्वा सूत्राणामर्थपूरणाय अर्थदृष्ट्या न्यूनताम् अधिकतां वा परिमार्ष्टुं वार्तिकानि लिलेख। तत्र सूत्रवार्तिकयोश्च सरलया सरसया भाषया संवादशैल्या प्रश्नोत्तरशैल्या वा विशदं व्याख्यानं महर्षिः पतञ्जलिः कृतवान्, यच्च ''महाभाष्यम्'' इति नाम्ना प्रसिद्धम् अस्ति।

एतत् सर्वम् अर्थात् पाणिनिसूत्राणि, कात्यायनस्य वार्तिकानि, पतञ्जलेश्च व्याख्यानभूतं महाभाष्यम् इति मिलित्वा 'पाणिनीयव्याकरणम्' इत्युच्यते। अत एव 'त्रिमुनि व्याकरणम्' इत्यपि उच्यते।

**व्याकरणशास्त्राध्ययनस्य उद्देश्यम् :-**

कस्यापि कार्यस्य प्रारम्भात्पूर्वं तत्र किमपि उद्देश्यं निश्चीयते। निष्प्रयोजनके कार्ये न कोऽपि प्रवर्तते। अतः व्याकरणाध्ययनस्य अपि केनचित् प्रयोजनेन अवश्यं भवितव्यम्। यद्यस्ति तर्हि किन्तत् ? इति प्रश्ने – वेदरक्षा एव व्याकरणाध्ययनस्य परमं प्रयोजनम् इत्युत्तरम्। वेदाः हि अस्माकं संस्कृतेः प्राणतत्त्वम्। वेदार्थज्ञानम् अस्मत्कृते आवश्यकम्। वेदार्थज्ञानाय वेदाङ्गज्ञानमावश्यकम्। वेदाङ्गेषु व्याकरणं मुखस्थानीयत्वेन मुख्यमङ्गं वेदस्य। मुख्ये कृतः यत्नः फलवान् भवतीति प्राह पतञ्जलिर्भगवान्। अर्थात् व्याकरणे कृतः श्रमः वेदार्थज्ञानरूपं फलं

प्रदातुं समर्थः। अतः व्याकरणस्य अध्ययनं कर्तव्यम्।

वस्तुतः भाषायां शब्दाः अपशब्दाश्च प्रयुज्यमानाः दृश्यन्ते। अर्थबोधस्तु शब्दैः अपशब्दैश्च अपि प्रयुक्तैः भवत्येव, तथापि शब्दप्रयोगे धर्मः अपशब्दप्रयोगे अधर्मः इति प्रतिपादितं भगवता पतञ्जलिना। शब्दप्रयोगे धर्मस्य आशयः तत्प्रयोगे शिष्टता प्रतीयते प्रयोक्तुः, अपशब्दप्रयोगे तु अशिष्टता तस्येति। अर्थात् संस्कृतज्ञैः पूर्वाचार्यैः शिष्टैः यादृशशब्दप्रयोगः कृतः तादृशं प्रयोगम् अयमपि प्रयोक्ता करोति न वा इत्येवं तस्य शिष्टता अशिष्टता च।

अतः वयं शिष्टप्रयुक्तान् प्रयोगान् कुर्याम, वयम् अशिष्टाः न स्याम, एतदर्थं व्याकरणमध्येयमस्माभिः। विना व्याकरणाध्ययनं शब्दविषयकसाधुत्वासाधुत्वविवेकः न उत्पद्यते। अतः साधुत्वासाधुत्वविवेकः एव सामान्यतः प्रयोजनम्। कात्यायनेन रक्षा, ऊहः, आगमः, लाघवम्, असन्देहश्च इति पञ्चप्रयोजनानि उक्तानि, तानि च मुख्यप्रयोजनानि। एतदतिरिच्य महाभाष्यकारः पतञ्जलिः त्रयोदशगौणप्रयोजनानि अपि निर्दिशति। अनेन एतत् समायातं यत् विना व्याकरणस्य ज्ञानं शास्त्ररहस्यं ज्ञातुं न शक्यम्।

वस्तुतस्तु शब्दप्रयोगविषयः अति विशालः वर्तते। तत्र सर्वे शब्दाः प्रतिपदपाठं कृत्वा न ज्ञातुं शक्यन्ते। अतः अल्पेन यत्नेन कयाचित् सरलया पद्धत्या महतः शब्दौघान पाठकः जानीयात्, एतदर्थ व्याकरणं लघूपायभूतं किमपि साधनं वर्तते। तत्र वाक्ये पदानि पदार्थाश्च कल्प्यन्ते, पदे पदार्थे च पुनः प्रकृतिप्रत्ययाः तत्तदर्थाश्च कल्प्यन्ते। येन एकस्मिन् शब्दे पदे वा ज्ञाते, तादृशाः अन्ये शब्दाः तेनैव पथा विज्ञापिताः भवन्ति। यथा रामशब्दविषयिण्यां प्रक्रियायां ज्ञातायां तादृशाः अकारान्ताः पुँल्लिङ्गशब्दाः ज्ञाताः भवन्ति, एकमेव अन्यत्रापि।

**प्रमुखाः वैयाकरणाः –**

यद्यपि पाणिनेः प्रागपि अनेके वैयाकरणाः बभूवुः, येषामुल्लेखः अन्यत्रान्यत्र मिलति, तेषु केषाञ्चिदुल्लेखं तु स्वयं पाणिनिः स्वकीयेषु सूत्रेष्वेव कृतवान् तथापि अत्र पाणिनिव्याकरणे ये प्रमुखाः वैयाकरणाः सन्ति तेषामेव संक्षिप्तः परिचयः अत्र प्रस्तूयते। तत्रापि पाणिनिकात्यायनपतञ्जलयः प्रमुखाः।

**१. पाणिनिः–**

पाणिनिः हि संस्कृतजगतः बहूपकारं कृतवान्। अनेन संस्कृतव्याकरणं विरचय्य संस्कृतस्य यद्रूपं तस्मिन् समये प्रचलदासीत्, तदेव रूपं अद्य यावत् सुरक्षितं कृतम्। सम्पूर्णेऽपि देशे विदेशे वा संस्कृतस्य तदेव रूपं वर्तमानमस्ति। पाणिनेर्जन्म ५०० खिस्ताब्दात् (ईस्वीतः) पूर्वम् अनुमीयते विद्वद्भिः। युधिष्ठिरमीमांसकस्तु वैक्रमाब्दात् २८०० वर्षाणि पूर्वम् अस्य स्थितिकालं मनुते। अस्य नाम 'पाणिनिः' इति गोत्रमाधारीकृत्य वर्तते। पाणिनेः वंशस्य मूलपुरुषः 'पाणिन्' आसीत्। पाणिनेः मातुर्नाम 'दाक्षी' आसीत्। कश्चन वैयाकरणः व्याडिनाम्ना ख्यातः, तस्य अपरं नाम 'दाक्षायणः' इति आसीत् 'दाक्षिः' इत्यपि तस्यैव नाम अतः सः पाणिनेः मातुः भ्राता आसीदिति अनुमीयते। यदि एतत् सत्यं तर्हि सः पाणिनेः मातुलः आसीत्। पाणिनेः एकं नाम 'शालङ्किः' इति उपलभ्यते। एतदनुसारम् अस्य पितुः नाम शलङ्कः आसीत्, शलङ्कस्य अपत्यं (सन्ततिः) पुमान् शालङ्किः इति व्युत्पत्तेः। पाणिनेः गुरोः नाम 'वर्षः' इत्यासीत्।

**पाणिनेः कृतयः –**

पाणिनेः प्रमुखा कृतिस्तु ''अष्टाध्यायी'' एव अस्ति। यत्र व्याकरणविषयकाणि ३९९८ सूत्राणि अष्टसु अध्यायेषु निबद्धानि सन्ति। तत्र प्रत्यध्यायं पादचतुष्कं, प्रतिपादं च बहूनि सूत्राणि सन्ति। 'जाम्बवतीविजयम्' इत्यपि अस्य काव्यम् अस्तीति विदुषां मतम्। राजशेखरः यः ९९० वैक्रमाब्दे आसीत्, पाणिनिं प्रशंसति निम्नश्लोकेन–

**नमः पाणिनये तस्मै यस्मादाविरभूदिह।**
**आदौ व्याकरणं काव्यमनु जाम्बवतीविजयम्॥**

अन्यत्रापि प्रमाणानि मिलन्ति एतद्विषये।

सिंहः वने पाणिनिं हतवान् इति पञ्चतन्त्रे मित्रसम्प्राप्तौ एकत्र श्लोके सूचना मिलति – तद्यथा ––

**''सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः**

**मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्।**
**छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्,**
**अज्ञानावृतचेतसामतिरुषां कोऽर्थश्चिरश्चां गुणैः॥ इति।**

**२. कात्यायनः -**

पाणिनेः व्याकरणे यदुक्तं, यदनुक्तं यच्च दुरुक्तं तद्विषये चिन्तनं विधाय कात्यायनेन वार्तिकानि रचितानि। पाणिनिना लिखिते व्याकरणतन्त्रे या न्यूनता अपूर्णता अस्पष्टता वा आसीत् तस्याः परिमार्जनम् एतैः वार्तिकैः सञ्जातम्। अतः कात्यायनस्य योगदानं पाणिनीयतन्त्रे महत्त्वपूर्णमस्ति। कात्यायनस्य अपरं नाम ''वररुचिः'' आसीत्। कात्यायनोऽसौ पाणिनेः समकालिकः आसीदिति श्रूयते। अतः अस्य स्थितिः कालः अपि खिस्ताब्दात् ५०० पूर्वम् अस्ति इति लभ्यते। युधिष्ठिरमीमांसकस्य मतानुसारमस्य कालः वैक्रमाब्दात् २७०० वर्षाणि पूर्वमासीत्। ''तद्धितप्रियाः दाक्षिणात्याः'' इति पतञ्जलिवचनमाधारीकृत्य विदुषां मतमस्ति यदसौ दाक्षिणात्यः आसीत।

'स्वर्गारोहणम्' इति नामकं काव्यमपि कात्यायनेन रचितम् इति अन्यान्य प्रमाणैः प्रमाण्यते विद्वद्भिः। प्रमाणत्वेन अयं श्लोकः द्रष्टव्यः -

**यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।**
**काव्येन रुचिरेणैव ख्यातो वररुचिः कविः।** इति।

**३. पतञ्जलिः**

पाणिनीयव्याकरणस्य त्रिषु मुनिषु अन्यतमः पतञ्जलिः, यः सर्वेषां प्रमाणभूतः आचार्यः अस्ति। अयं पाणिनेः सूत्राणां कात्यायनस्य वार्तिकानाञ्च सूक्ष्मेक्षिकः समीक्षकः आसीत्। अतः त्रिष्वपि वैयाकरणेषु प्रामाणिकतमः अयम् आचार्यः। अत एव उच्यते - ''यथोत्तरं मुनीनां प्रामाण्यम्।'' इति।

पतञ्जलेः महाभाष्ये महाभाष्यकारस्यास्य द्वे नामनी उपलभ्येते - गोनर्दीयः गोणिकापुत्रश्च इति। गोनर्दीयः इत्यनेन नाम्ना ज्ञायते यदसौ ''गोनर्द'' देशवास्तव्यः आसीत्। अधुनातनकाले 'गोण्डा' इति नाम्ना यत् स्थानं ज्ञायते, तस्यैव 'गोनर्द' नाम आसीत्। अतः पतञ्जलिः गोनर्दीयः = अधुनातनस्य 'गोण्डा' प्रदेशस्य निवासी आसीद् इति सिद्ध्यति। अन्ये तु विद्वाँसः एनं काश्मीरदेशीयम्, अपरे तु पाटलिपुत्रवास्तव्यं मन्यन्ते। अस्य मातुः नाम 'गोणिका' आसीत्।

अयं महामुनिः 'महाभाष्यम्' इति नाम्नीं रचनां कृतवान्। अस्मिन् ग्रन्थे पाणिनिसूत्राणां कात्यायनस्य वार्तिकानां च सरला सरसया असमस्तपदात्मिकया भाषया अनेन व्याख्यानं कृतमस्ति। अत्र न केवलं व्याकरणस्यैव दुरूहविषयाणां सारल्येन उपस्थापनं वर्तते, अपितु तात्कालिकसामाजिकस्थितेः, धार्मिकस्थितेः, भौगोलिकस्थितेः, ऐतिहासिकस्थितेश्च सम्यक् वर्णनम् उपलभ्यते। अतः महाभाष्यं सर्वन्यायबीजानां निबन्धनमस्ति इति उक्तम् भर्तृहरिणा।

चरकसंहितायाः योगशास्त्रस्य च रचयिता अपि अयमेव इति केषाञ्चित् मान्यता। कैय्यटः लिखति -

**''योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।**
**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि।'' इति।**

अस्य स्थितिकालः १५० खिस्ताब्दात् पूर्वं आसीदिति निर्धारयन्ति जनाः। युधिष्ठिरमीमांसकस्तु विक्रमात् १२०० वर्षेभ्यः पूर्ववर्तिनमस्य स्थितिकालं मनुते।

## सूत्रलक्षणं तद्भेदाश्च

**सूत्रलक्षणम् -**

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥**

अल्पैः (न्यूनैः) अक्षरैः समन्वितं सन्देहशून्यं, सारयुक्तं सर्वतोभावेन प्रभावि, दोषरहितम्, अनिन्दनीयम् अर्थकथनं 'सूत्रम्' इति कथ्यते।

**सूत्रस्य भेदाः -**

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकाश्च षड्विधं सूत्रमुच्यते॥**

अर्थात् सूत्रस्य षड्विधत्वमस्ति तद्यथा - संज्ञासूत्रं, परिभाषासूत्रं विधिसूत्रं, नियमसूत्रम, अतिदेशसूत्रम्, अधिकारसूत्रञ्च इति।

**( १ ) संज्ञासूत्रम् -**

येन सूत्रेण संज्ञासंज्ञिनोः ज्ञानं भवति, तत्सूत्रं संज्ञासूत्रम् उच्यते। यया ज्ञायते सा संज्ञा, संज्ञा यस्य भवति स संज्ञी भवति। अर्थात् संज्ञा इत्युक्तेः नामकथनम्, संज्ञीत्युक्तेः अर्थः। यथा 'अदेङ्गुणः' इति। अत्र गुणः इति संज्ञा, अत् एङ् च इति संज्ञी। अर्थात् 'अ,ए,ओ' इत्येषां वर्णानां 'गुण' इति संज्ञा। 'वृद्धिरादैच्' इत्यपि संज्ञासूत्रम्। तत्र 'वृद्धि' इति संज्ञा, आदैच् इति संज्ञी। 'वृद्धि' इत्यनेन आ, ऐ, औ इति संज्ञित्वेन ज्ञायन्ते।

**( २ ) परिभाषासूत्रम् -**

परितः सर्वतो भाष्यते अनया, सा परिभाषा, अथवा अनियमे नियमकारिणी परिभाषा इत्यपि उच्यते। परिभाषासूत्रं सर्वं व्याकरणशास्त्रं तथैव उपकरोति यथा सुप्रज्वलितः दीपः सर्वं गृहं प्रकाशयति। यथा - ''तस्मिन्नितिनिर्दिष्टे पूर्वस्य'' ''तस्मादित्युत्तरस्य'' इत्यादीनि सूत्राणि। परिभाषाऽपि त्रिविधा - काचित् ज्ञापकसिद्धा, न्यायसिद्धाऽन्या, वाचनिकी तृतीया। या केनापि सूत्रेण सूत्रांशेन वा ज्ञाप्यते सा ज्ञापकसिद्धा। यथा-'संज्ञापूर्वको विधिरनित्यः'। लौकिकन्यायेन सिद्धिर्यस्याः न्यायसिद्धा सा, यथा 'एकदेशविकृतमनन्यवत्' इति। वचनरूपेण पठिता तु वाचनिकी। यथा ''तस्मिन्निति.'' इत्यादिः।

**( ३ ) विधिसूत्रम् -**

विधीयते इति विधिः = कार्यम्। आदेशागमप्रत्ययादिविधायकं सूत्रं विधिसूत्रम् उच्यते। आदेशदिकार्यं येन विधीयते तदिति भावः। यथा ''इको यणचि'' ''एचोऽयवायावः'' इत्यादीनि। निषेधकसूत्राणि अपि विधि सूत्रेष्वेव अन्तर्भवन्ति, तेषाम् अभावरूपापूर्वबोधकत्वात्।

**( ४ ) नियमसूत्रम् -**

प्रसङ्गप्राप्तस्य विधेः नियामकः विधिः येन सूत्रेण भवति तत्सूत्रं नियमसूत्रम्। प्राप्तविधेः विस्तृतक्षेत्रस्य संकोचनं वा। यथा ''शेषो घ्यसखि'' इत्यनेन सखिवर्जितस्य इकारान्तस्य उकारान्तस्य पुँल्लिङ्गशब्दस्य प्राप्तायाः घिसंज्ञायाः पतिशब्दस्यापि इकारान्तत्वात् प्राप्तिः भवति, तत्र 'पतिः समास एव'' इत्यनेन नियम्यते यत् पतिशब्दस्य समासे एव घिसंज्ञा भवति, न केवलस्य। अतः सेनापति, भूपतिप्रभृतीनां घिसंज्ञाभवति, केवलस्य पतिशब्दस्य तु न भवति इति नियमः। अत्र ''पतिः समास एव'' इति नियमसूत्रम्। 'कृत्तद्धितसमासाश्च' इत्यपि नियमसूत्रम्।

**( ५ ) अतिदेशसूत्रम् -**

अतद्धर्मवति तद्धर्मारोपकम् अतिदेशसूत्रम्। यथा - 'स्थानिवदादेशोऽनल्वि धौ' इति। स्थानी भिन्नः, आदेशश्च भिन्नः भवति। आदेशे स्थानित्वं नास्ति तथापि स्थानित्वाभाववति आदेशेऽपि स्थानिवद्भाव अनेन आरोप्यते, अतः अस्य अतिदेशसूत्रत्वम्।

**( ६ ) अधिकारसूत्रम् -**

प्रत्येकस्मिन् सूत्रे पदविशेस्य आवृत्तिं वारयितुम् अधिकारसूत्रं प्रारभते। एकत्र उपात्तस्य पदस्य उत्तरोत्तरसूत्रेषु प्रवृत्तिः अनेन भवति। अतः पश्चाद्वर्तिषु सूत्रेषु स्वघटकपदसमर्पकं पदार्थसमर्पकं वा सूत्रम् अधिकारसूत्रं कथ्यते। अयञ्च अधिकारः विषयदृष्ट्या संज्ञाधिकारः, परिभाषाधिकारः, प्रकरणाधिकारः, प्रत्ययाधिकारश्च इत्येवं

बहुविध:। 'कारके' 'आर्धधातुके' 'प्राग्दीव्यतोऽण्' इत्यादीनि अधिकारसूत्राणि।

अधिकारस्य प्रभावश्च त्रिप्रकारक:। तद्यथा -

**सिंहावलोकितं चैव मण्डूकप्लुतमेव च।**
**गङ्गाप्रवाहवच्चापि अधिकारस्त्रिधा मत:॥**

**व्याख्यानस्य लक्षणम् -**

**पदच्छेद: पदार्थोक्ति: विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्॥**

न केवलम् अर्थकथनं व्याख्यानं भवति, अपितु तस्य पदच्छेद: पदार्थोक्ति: विग्रह:, वाक्ययोजनम्, आक्षेप: समाधानं च इत्येवं सोपानानि सन्ति, एतानि समुदितं। व्याख्यानं कथ्यते।

**( १ ) पदच्छेद: -**

पदानां छेद: = पदविभाजनं पदच्छेद: उच्यते।

यथा - वृद्धिरादैच्' इति सूत्रस्य 'वृद्धि:+आत्+ऐच्' इत्येवं पदविभाजनं करणीयम्। अयमेव पदच्छेद:।

**( २ ) पदार्थोक्ति: -**

पदानामर्था: पदार्था:, तेषाम् उक्ति: = कथनं पदार्थोक्ति उच्यते। अर्थात् प्रत्येकं पदस्य अर्थकथनम्। यथा - वृद्धि: इति संज्ञा, आत् ऐच् = आ, ऐ, औ इत्येते वर्णा: संज्ञिन: सन्ति इत्येवं कथनम्।

**( ३ ) विग्रह: -**

समस्तपदस्य वाक्यरूपेण प्रदर्शनं, समासप्रदर्शनञ्च विग्रह:। अत एव 'वृत्त्यर्थावबोधकं वाक्यं विग्रह:' इति कथ्यते। यथा 'आदैच्' इत्यस्य आत् च ऐच् च इति आदैच् इत्येवं समाहारद्वन्द्व: इति प्रदर्शनम्।

**( ४ ) वाक्ययोजना -**

व्याख्येयस्य अर्थज्ञापनं वाक्ययोजना उच्यते। यथा - 'वृद्धिरादैच्' इति व्याख्येयस्य आकार:, ऐकार:, औकारश्च वृद्धिसंज्ञका: अथवा आकारैकारौकाराणां वृद्धिसंज्ञा इत्येवं वाक्यार्थज्ञापनम्। (आकारैकारौकाराभिन्ना वृद्धि: इति वा)

**( ५ ) आक्षेप:-**

सति सम्भवे आक्षेपकथनम् आक्षेप: उच्यते। यथा 'पूर्वम् उद्देश्यस्य कथनं स्यात् ततश्च विधेयस्य' इति सामान्यनियमानुसारं' ''वृद्धिरादैच्'' इत्यत्र पूर्वम् 'आदैच्' इति उद्देश्यकथनं करणीयमासीत् पश्चाच्च 'वृद्धि:' इति विधेयस्य कथनम्। कथं पाणिनि: विधेयं पूर्वमुक्त्वा पश्चाद् उद्देश्यम् उक्तवान् ? इत्येवं शङ्काया: अवतारणम् आक्षेप:।

**( ६ ) समाधानम् -**

आक्षेपस्य युक्तियुक्तं निराकरणं समाधानमुच्यते। यथा 'वृद्धिरादैच्' इति सूत्रे 'वृद्धि:' इति पदस्य विधेयत्वेऽपि मङ्गलार्थत्वात् आदौ प्रयोग: इति समाधानम्। अष्टाध्याय्या: प्रथमेऽस्मिन् सूत्रे आदौ प्रयुक्त: ''वृद्धि शब्द: ग्रन्थादौ मङ्गलार्थक:'' इत्येवम् आक्षेपस्य औचित्यपूर्णं समाधानं भगवान् महाभाष्यकार: आह।

## व्याकरणशास्त्रस्य पारिभाषिका: शब्दा:

**उपदेश:-**

आद्यर्थक'उप' इति उपसर्गपूर्वकात् उच्चारणक्रियार्थकात् दिश् धातो: भावे घञ्प्रत्यये निष्पद्यते 'उपदेश' शब्द:। अत: आद्यम् उच्चारणम् इति उपदेशशब्दस्यार्थ:। अत एव कौमुद्यामुक्तम् उपदेश आद्योच्चारणमिति।

**आगमः-**

आगमनम् आगमः। कयोश्चित् वर्णयोः मध्ये, कस्याप्यन्ते आदौ वा वर्णान्तरस्य यद् आगमनं भवति, तदेव 'आगमः इत्युच्यते। अत एव उच्यते - 'वर्णोपस्थितिरागमः' इति। आगमः मित्रवत् भवति। यथा मित्रं न हन्ति, अपितु पार्श्वे तिष्ठति तथैव आगमः अपि यस्य भवति तस्य आदौ अन्ते वा अवयवत्वेन तिष्ठति। यथा 'ङःसि धुट्' इत्यादि।

**आदेशः**

आदिश्यते असौ आदेशः। प्रकृतेः, प्रत्ययस्य, वर्णद्वयस्य मेलने वा यद् रूपान्तरं भवति 'तदेव आदेशः' उच्यते। 'रूपान्तरापत्तिरादेशः' इत्युक्तेः। आदेशः यस्य भवति, तस्य स्थानिनः उपघाती भवति, अतः शत्रुवद् आदेशः इत्युच्यते। यथा 'इको यणचि' इति इकारस्य उपघाती यकारः। 'ङेर्यः' इति 'ङे' प्रत्ययस्य अपहर्ता 'य' आदेशः।

**लकारः**

संस्कृतभाषायां कालं बोधयितुं वृत्तिं च बोधयितुं धातुभ्यः परतः लकाराः प्रयुज्यन्ते। इमे च दशसंख्याकाः सन्ति। ते च लट्, लिट्, लुट् लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् इति। एषु सर्वेषु 'ल्' इति अवशिष्यते, अतः इमे लकाराः उच्यन्ते। एषु लेट् लकारः वेदे एव प्रयुज्यते। लिङस्तु भेदद्वयं भवति विधि लिङ् अशिर्लिङ् इति। लट् वर्तमानस्य, लुट लृट् इति भविष्यतः, लिट्, लङ्, लुङ् इत्येते भूतकालस्य बोधकाः। लोट, लिङ्, लृङ् च वृत्तेः बोधकाः।

**अनुनासिकः-**

मुखसहितनासिकया उच्चार्यमाणः वर्णः अनुनासिकः भवति - 'मुखनासिकावचनोऽनुनासिकः' इति सूत्रात्। मुखं विना वर्णानामुच्चारणं न भवति, अतः केवलया नासिकया उच्चारणस्य असम्भवात् मुखसहितया तया इत्युक्तम्। यस्य वर्णस्य उच्चारणं मुखसहितनासिकया भवति, स वर्णः अनुनासिकः इति भावः।

**अननुनासिकः-**

यः वर्णः अनुनासिकः न सः अननुनासिकः भवति। अर्थात् यस्य उच्चारण नासिकायाः उपयोगः न भवति। केवलेन मुखेन यस्य उच्चारणं भवति स अननुनासिक वर्णः इत्युच्यते।

## समासः

समसनं समासः। 'सम्' उपसर्गपूर्वकात् 'अस्' धातोः भावे 'घञ्' प्रत्यये समासशब्दस्य निष्पत्तिः भवति। अर्थात् विभक्तिलोपपूर्वकं संक्षिप्तीकरणं (समसनं) समास उच्यते। अयमाशयः - पृथक् पृथग् अर्थबोध कानाम् अनेकेषां पदानां विभक्तिलोपपूर्वकम् एकार्थकथनत्वं समासत्वम्।

समासस्य निम्नभेदाः सन्ति -

**१. केवलसमासः-**

यस्य न किमपि विशिष्टं नाम भवति, स केवलसमासः। एकं सुबन्तम् अन्येन सुबन्तेन सह समस्यते, तस्य केवलसमास इति संज्ञा भवति। यथा - पूर्वं भूतः = भूतपूर्वः। इति।

**२. अव्ययीभावः -**

अत्र समासे पूर्वप्रयुक्तस्य पदस्यार्थः प्रधानः भवति 'पूर्वपदार्थप्रधानोऽव्ययीभावः' इति। अस्मिन् समासे प्रायः पूर्वपदम् अव्ययं भवति, उत्तरपदं तु अनव्ययम्। यथा 'अधिहरि' 'अपदिशम्' इत्यादीनि।

**३. तत्पुरुषः -**

अत्र उत्तरपदार्थस्य प्राधान्यं भवति, पूर्वं पदं तु उत्तरपदस्य विशेषणं भवति। अयञ्च समासः व्यधिकरणतत्पुरुषः समानाधिकरणतत्पुरुषश्च इत्येवं द्विविधः भवति। व्यधिकरणस्तु यथा – कृष्णं श्रितः = कृष्णश्रितः, राज्ञः पुरुषः = राजपुरुषः इत्यादिः। समानाधिकरणस्तु 'कर्मधारयः' इति नाम्ना ज्ञायते, यथा – नीलञ्च तद् उत्पलम् = नीलोत्पलम्। यत्र तत्पुरुषे पूर्वपदं संख्यावाचकं भवति, स द्विगुसंज्ञकः। यथा 'पञ्चगवम्' इत्यादिः।

**४. बहुव्रीहिः –**

अन्यपदार्थप्रधानः बहुव्रीहिः। अर्थात् यत्र समासे प्रयुक्तानां पदानाम् अर्थाः अप्रधानाः भवन्ति, अन्य एव पदार्थः तत्र प्रधानः भवति, स समासः बहुव्रीहिः। अयम् अपि समानाधिकरणबहुव्रीहिः, व्यधिकरणबहुव्रीहिश्च इति द्विविधः। समानाधिकरणबहुव्रीहेः उदाहरणम् – पीतम् अम्बरं यस्य स पीताम्बरः। अत्र समस्तपदयोरर्थस्य अप्राधान्यम् अस्ति, अन्यस्यैव अर्थस्य (यः पीतम् अम्बरं धृतवान् अस्ति) प्राधान्यम् अत्र। व्यधिकरणबहुव्रीहेः उदाहरणम् – चक्रं पाणौ यस्य स चक्रपाणिः इति। अत्रापि अन्यपदार्थस्य एव प्राधान्यम्।

**५. द्वन्द्वसमासः**

उभयपदार्थप्रधानः द्वन्द्वः। अत्र समस्यमानयोः उभयोः एव पदयोः अर्थौ प्रधानौ भवतः। अयं चार्थे भवति, अतः पदयोः मध्ये 'च' इति प्रयुज्यते। अयमपि द्विविधः भवति। इतरेतरयोगद्वन्द्वः – यथा – रामश्च लक्ष्मणश्च रामलक्ष्मणौ इति। समाहारद्वन्द्वः – यथा – पाण्योः पादयोः च समाहारः पाणिपादम् इति। इतरेतरयोगे पदानां संख्यानुसारं वचनं प्रयुज्यते। समाहारे तु एकवचनम् नपुंसकत्वञ्च।

**सन्धिः –**

मेलनं सन्धिः। द्वयोः वर्णयोः मेलनं सन्धिः उच्यते। सन्धिश्च वर्णानाम् अतिशयितसन्निधौ एव भवति। अर्थात् संहितायां सन्धिः भवति। उभौ अपि वर्णौ यदि स्वरौ (अचौ) स्तः, तयोर्मध्ये जायमानः सन्धिः अच्सन्धिः (स्वरसन्धिः) कथ्यते। यण्, अयादिः, गुणः, वृद्धिः पूर्वरूपम, पररूपम्, प्रकृतिभावः इत्यादयः अस्य भेदाः भवन्ति।

व्यञ्जनयोः मध्ये जायमानः सन्धिः हल्सन्धिः। अस्य श्चुत्वष्टुत्वादयः भेदाः सन्ति। यत्र पूर्वपक्षतः व्यञ्जनम् अपरपक्षतः स्वरः, सः अपि हल्सन्धिरेव।

**उपधा –**

'उपधा' इति शब्दः व्याकरणे पारिभाषिकः। ''अलोऽन्त्यात्पूर्व उपधा'' इति सूत्रानुसारम् शब्दे पदे वा अन्त्याद् अलः पूर्वस्य वर्णस्य उपधासंज्ञा भवति। यथा 'जगत्' इति शब्दे अन्त्याल् तकारः अस्ति, ततः पूर्ववर्णः गकारोत्तरवर्ती अकारः 'उपधा' संज्ञकः। 'घटः' इत्यत्र अन्त्याल् अकारः, तस्मात्पूर्वः 'टवर्णः उपधासंज्ञकः'।

**गणः –**

गणः इत्युक्तेः समूहः अर्थः। शब्दानां धातूनां च गणाः व्याकरणशास्त्रे उपलभ्यन्ते। समानप्रकृतिकाः समानकार्यभाजश्च शब्दाः एकस्मिन् समूहे पात्यन्ते, तेषाम् आदौ स्थितशब्दानुसारं गणनाम निर्धार्यते। धातूनां कार्यदृशा दशसु विभागेषु विभाजनं कृतमस्ति। स च विभागः गणनाम्ना कथ्यते। ते च क्रमशः भ्वादिः, अदादिः, जुहोत्यादिः दिवादिः, स्वादिः, तुदादिः, रुधादिः, तनादिः, क्र्यादिः, चुरादिश्च सन्ति। एवमेव पृषोदरादिगणः अजादिगणः, शिवादिगणः इत्यादयः।



शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्।
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम्।।

॥ श्रीगणेशाय नमः॥

श्री वरदराजाचार्यप्रणीता

# लघुसिद्धान्तकौमुदी

**नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम्।**
**पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम्॥**

---

**गणराजं गुरुं नत्वा शारदां कुलदेवताम्।**
**बालानां सुखबोधाय, व्याख्यामेतां करोम्यहम्॥**

१. कौमुदी चन्द्रिका। मोदते इति मुदः, हर्ष आनन्दो वा। कोः पृथिव्याः मुदः कुमुदः, यद्वा कौ पृथिव्यां मुदः येन यस्माद् वा असौ कुमुदः = चन्द्रमाः। तस्य कुमुदस्य इयं कौमुदी अर्थात् प्रकाशिका ज्योत्स्ना वा। वैयाकरणानां = व्याकरणाध्येतॄणां व्याकरणवेत्तॄणां वा ये सिद्धान्ताः निर्णीतार्थाः, तेषां कौमुदी इव कौमुदी इति सिद्धान्तकौमुदी। लघ्वी चासौ सिद्धान्तकौमुदी इति लघुसिद्धान्तकौमुदी अथवा लघवः=अल्पाः (न सर्वे) सिद्धान्ताः लघुसिद्धान्ताः तेषां कौमुदी इति लघुसिद्धान्तकौमुदी। चन्द्रिका यथा अन्धकारं निरस्य पदार्थान् सुखं प्रकाशयति, तथा इयमपि ग्रन्थरूपा कौमुदी वैयाकरणानां सिद्धान्तान् सारल्येन प्रकाशयति, बालान् बोधयति। अतः अस्याः कौमुदीसादृश्यात् कौमुदीत्वमिति ज्ञेयम्।

२. अहं (वरदराजाचार्यः) शुद्धां = दोषशून्यां निर्मलां वा गुण्यां = प्रशस्तगुणोपेतां

## अथ संज्ञाप्रकरणम्

**अ इ उ ण् ।१।** **ऋ ऌ क् ।२।** **ए ओ ङ् ।३।**
**ऐ औ च् ।४।** **ह य व र ट् ।५।** **ल ण् ।६।**
**ञ म ङ ण न म् ।७।** **झ भ ञ् ।८।** **घ ढ ध ष् ।९।**
**ज ब ग ड द श् ।१०।** **ख फ छ ठ थ च ट त व् ।११।**
**क प य् ।१२।** **श ष स र् ।१३।** **ह ल् ।१४।**

इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि। एषामन्त्या इत:। हकारादिष्वकार उच्चारणार्थ:। लण्मध्ये त्वित्संज्ञक:।

---

(सत्त्वरजस्तमसां मध्ये सत्त्वगुणस्यैव प्रशस्तत्वात् गुणशब्देन अत्र सत्त्वगुणस्यैव ग्रहणात् सत्त्वगुणप्रधानाम् इत्यर्थ:) सरस्वतीं = ज्ञानाधिष्ठात्रीं वाग्देवतां नत्वा=प्रणम्य पाणिनीयप्रवेशाय=पाणिनिप्रोक्ते शब्दशास्त्रे सुकुमार-मतीनां बालानां प्रवेशो यथा स्यात् तथा कर्तुं ''लघुसिद्धान्तकौमुदी'' इति नाम्नीं रचनां पुस्तिकां वा करोमि = रचयामि।

३. एतानि चतुर्दशसूत्राणि माहेश्वराणि सूत्राणि कथ्यन्ते, यतो हि महर्षि: पाणिनि: तपो विधाय भगवत: महेश्वरात् इमानि प्राप्तवान्। महेश्वरात् आगतानि, अत: इमानि माहेश्वराणि इति उच्यन्ते। यथोक्तं नन्दिकेश्वरेण काशिकायाम्
**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।**
**उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥ इति**

४. किमर्थानि एतानि ? इति प्रश्ने आह - अणादिसंज्ञार्थानि। अण् आदि: यासां ता: अणादय:, ता: संज्ञा: अणादिसंज्ञा:। अणादिसंज्ञा: अर्थ: प्रयोजनं येषां, तानि (माहेश्वरसूत्राणि) अणादिसंज्ञार्थानि। अर्थात् अणादिसंज्ञा: एव एषां प्रयोजनमस्तीति भाव:। एभिरेव सूत्रै: अणादय: प्रत्याहारा: निर्मीयन्ते इत्याशय:।

५. एषां प्रत्येकं सूत्राणाम् अन्ते भवा: वर्णा: (अन्त्या: णादय: वर्णा:) इत्संज्ञका: सन्ति।

६. 'ह य व र ट्' इत्यत: आरभ्य व्यञ्जनवर्णा: उपदिश्यन्ते, तत्र प्रतिवर्णं पुन: पुन: अकारोच्चारणं किमर्थम् ? किं हलादिप्रत्याहारे अकारस्य अपि ग्रहणं

१. **हलन्त्यम् १/३/३**

उपदेशेऽन्त्यं हलित् स्यात्। उपदेश आद्योच्चारणम्। सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र।।

२. **अदर्शनं लोपः १/१/६०**

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्।

३. **तस्य लोपः १/३/९**

तस्येतो लोपः स्यात्। णादयोऽणाद्यर्था:[१]।

---

भवति वा ? इति जिज्ञासायाम् आह – तत्र हकारादिषु अकारः उच्चारणार्थः, न किमपि तस्य अन्यत् प्रयोजनम्। विना स्वरं व्यञ्जनानामुच्चारणं न भवति इति हेतोः तत्र प्रतिव्यञ्जनं पुनः पुनः अकारोच्चारणमिति भावः। लण् सूत्रे तु लकारात् परः यः अकारः स न केवलः उच्चारणप्रयोजनकः, अपि तु इत्संज्ञकः सः। तेन च रप्रत्याहारः सिद्ध्यति इति कैय्यटेन कृता कल्पना, तामेव कैय्यटकल्पनाम् अनुसृत्य भट्टोजिदीक्षितः वरदराजाचार्यश्चापि लिखति–'लण्मध्ये त्वित्संज्ञकः' इति।

१. **हलन्त्यम्** – हल् + अन्त्यम् इतिच्छेदः।

पाणिनेः अष्टाध्याय्याम् अष्टौ अध्यायाः सन्ति। प्रत्यध्यायं चत्वारः पादाः, प्रतिपादं च नैकानि सूत्राणि सन्ति। अत्र सूत्राणाम् अग्रे उल्लिखिता संख्या क्रमशः अध्यायस्य, पादस्य, सूत्रस्य च बोधिका अस्ति। यथा अस्मिन् सूत्रे १।३।३ इति संख्या बोधयति यदिदं प्रथमाध्यायस्य तृतीयपादस्य तृतीयं सूत्रम् अस्ति। इदं सूत्रम् उपदेशे विद्यमानस्य अन्त्यस्य हलः = व्यञ्जनस्य इत्संज्ञां करोति। उपदेशः कः ? इति प्रश्ने आह – उपदेशः आद्योच्चारणम् इति। आद्यमुच्चारणम्, आद्यानां पाणिन्यादिमुनीनाम् उच्चारणं वा उपदेशः उच्यते। केचन तु

**''धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।**

**आगमप्रत्ययादेशाः उपदेशाः प्रकीर्तिताः।।** इति उपदेशाः इति मन्यन्ते।

अतः एषां धात्वादीनाम् अन्त्यस्य हलः अनेन सूत्रेण इत्संज्ञा विधीयते।

'हलन्त्यम्' इत्येतावत् एवं सूत्रमस्ति, किन्तु अस्य विवरणे वृत्तौ 'उपदेशे' 'इत्' इति पदद्वयम् अधिकं लिखितं, तत् कुतः समायातमिति प्रश्ने आह–'सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र' इति। अर्थात् सूत्रे साक्षाद् अनुल्लिखितमपि सूत्रार्थज्ञानाय अपेक्षितं पदं सूत्रान्तराद्= अन्यस्मात्सूत्रात् अनुवर्तनीयं भवति। अतः अत्र 'उपदेशे' 'इत्' इति पदद्वयं 'हलन्त्यम्' इति सूत्रे अनुल्लिखितमपि सत् ''उपदेशेऽजनुनासिक इत्'' इति सूत्राद् अनुवृत्तिद्वारा आगच्छति इति भावः।

२. **अदर्शनं लोपः** – शास्त्रतः प्रसक्तस्य प्राप्तोच्चारणस्य उच्चारणाभावः अत्र अदर्शनपदस्य अर्थः। अर्थात् उपदेशे विद्यमानसत्ताकस्य वर्णसमुदायस्य तदंशस्य वा उच्चारणाभावः लोपसंज्ञकः भवति। विद्यमानस्यापि दर्शनाभावः = श्रव्यत्वाभावः लोपः इति उच्यते इति भावः।

३. **तस्य लोपः** – तस्य इतः=इत्संज्ञकस्य लोपो भवति अर्थात् यस्य वर्णस्य इत्संज्ञा क्रियते, तस्य वर्णस्य लोपः = अदर्शनम्=उच्चारणाभावः वा भवति।

१. प्रतिमाहेश्वरसूत्रम् अन्त्यः वर्णः इत्संज्ञकः इति उक्तम्, यस्य च इत्संज्ञा भवति, तस्य च लोपः अपि भवति इत्यपि उक्तम्। अतः एतादृश्यां स्थितौ सूत्रान्त्यानां ण्क्ङ्चादीनां माहेश्वरसूत्रेषु पाठस्य कः लाभः ? तेषाम् तु लोपः भविष्यत्येव, अतः ते णादयः किमर्थाः इति प्रश्ने आह – 'णादयोऽणाद्यर्थाः' इति।अर्थात् एते णादयः अणादिप्रत्याहारप्रयोजनकाः सन्ति। एतेषाम् इत्संज्ञकत्वात् एभिः अणादयः प्रत्याहाराः रचयिष्यन्ते इति भावः। अणादि प्रत्याहाराः अर्थः प्रयोजनं येषां ते अणाद्यर्थाः।

४. **आदिरन्त्येन सहेता १/१/८१**

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्। यथाऽणिति अ इ उ वर्णानां संज्ञा। एवमच्हल् अल् इत्यादयः।

५. **ऊकालोऽज्झ्रस्वदीर्घप्लुतः १/२/२८**

उश्च ऊश्च ऊ३श्च वः। वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्। स प्रत्येकमुदात्तादिभेदेन त्रिधा।

६. **उच्चैरुदात्तः १/२/२९**

ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात्।

---

४ **आदिरन्त्येन सहेता** – आदिः अन्त्येन सह इता इतिच्छेदः। अन्त्येन इत्संज्ञकेन सह आदिः मध्यवर्तिनां स्वस्य च संज्ञा भवति। यथा 'अ इ उ ण्' इत्यत्र अन्त्यः ण् वर्णः इत्संज्ञकः। तेन इत्संज्ञकेन सह आदिः 'अण्' इति मध्यवर्तिनोः 'इ उ' इत्यनयोः स्वस्य च (आदेः अकारस्य) संज्ञा = बोधकः भवति, अतः तादृशः आदिः 'अण्' इति 'अ इ उ' इति वर्णत्रयस्य संज्ञा भवति। अन्त्यस्य इतः तु तत्र ग्रहणं न भवति। एवमेव अच् हल् अलित्यादयः प्रत्याहारा अपि बोध्याः। तद्यथा –अन्त्येन इता 'च्' इत्यनेन सह आदिः 'अच्' इति 'अ इ उ ऋ लृ ए ओ ऐ औ' इत्येतेषां वर्णानां संज्ञा भवति। 'हल्' इति तु 'ह य व र ट्' इत्यतः आरभ्य सर्वेषां व्यञ्जनानां संज्ञा। अल् इति तु स्वराणां व्यञ्जनानां समेषां संज्ञा, अतः 'अल्' इति वर्णपर्यायः। 'हल्' इति प्रत्याहारे आदित्वेन 'ह य व र ट्' सूत्रस्थः हकारः ग्राह्यः, न तु चतुर्दशतमसूत्रस्थः इति विशेषः। पाणिनीयतन्त्रे सूत्रेषु वार्तिकेषु च व्यवहृतानां प्रत्याहाराणां संख्या ४२ वर्तते, तद्यथा अक्, अच्, अट्, अण्, अण् अम्, अल्, अश् इक्, इच्, इण्, उक्, एङ्, एच्, ऐच्, खय्, खर्, ङम्, चय्, चर्, छव्, जश्, झश्, झय्, झर्, झल्, झष्, बश्, भष्, मय्, यञ्, यण्, यम्, यय्, यर्, रल्, वल्, वश्, शर्, शल्, हल्, हश् इति।

५. **ऊकालः अच् ह्रस्वदीर्घप्लुतः** इति पदच्छेदः। 'वः' इति 'ऊ' इत्यस्य प्रथमाबहुवचने रूपम्। 'वाम्' इति तु तस्य षष्ठीबहुवचने। 'उ' इत्यस्य 'ऊ' इत्यस्य 'ऊ ३' इत्यस्य च उच्चारणे यः कालः अपेक्ष्यते सः 'ऊकालः। ऊकाल इव कालः यस्य अचः, सः अच् ऊकाल इत्युच्यते। तादृशः ऊकालः अच् क्रमशः ह्रस्वः, दीर्घः, प्लुतश्च संज्ञः भवति। अयमाशयः – 'उ' इति एकमात्रिकस्य उच्चारणे यः कालः, तादृशः कालः यस्य अचः, स अच् ह्रस्वसंज्ञकः। यस्य 'ऊ' इति द्विमात्रिकस्य उच्चारणकालसदृशः कालः, स अच् दीर्घसंज्ञकः। यस्य च 'ऊ३' इतिवत् उच्चारणकालः (त्रिमात्रिकोच्चारणकालसदृशःकालः) स अच् प्लुतसंज्ञकः भवति इति ज्ञेयम्। 'ऊ' शब्दः अत्र एकमात्रद्विमात्रत्रिमात्रकुक्कुटरुतस्य अनुकरणपरः। स च ह्रस्वः दीर्घः प्लुतश्च प्रत्येकम् उदात्तादिभेदत्रयेण त्रिधा भिद्यते। के सन्ति उदात्तादयः? अत वक्ष्यते 'उच्चैरुदात्तः इत्यादि।

६. **उच्चैरुदात्तः** – उच्चैः उदात्तः इतिच्छेदः। अत्र उच्चैः इति शब्दः अधिकरण शक्तिप्रधानः ऊर्ध्वभागेऽर्थे विद्यते। नादधर्मविशेषः उच्चैस्त्वं तु अत्र न विवक्षितं, तथा सति उपांशूच्चारणे स्वरस्य उदात्तता न स्यात्। ताल्वादिस्थानानाम् ऊर्ध्वम् अधः मध्यश्च इति भागाः भवन्ति, तेषु सभागेषु ताल्वाद्युच्चारणस्थानेषु ऊर्ध्वभागे निष्पन्नः अच् उदात्तसंज्ञः भवति इत्यर्थः।

७. **नीचैरनुदात्तः १।२।३०**

ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात्।

८. **समाहारः स्वरितः १/२/३१**

यस्मिन् उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते सोऽच् स्वरितसंज्ञः स्यात्।

स नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा।

९. **मुखनासिकावचनोऽनुनासिकः १/१/८**

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम् –

---

७. नीचैः अनुदात्तः इतिच्छेदः। अत्र नीचैः इतिशब्दः अपि अधिकरणशक्तिप्रधानः सन् अधोभागेऽर्थे वर्तते। अतः ताल्वादिषु सभागेषु उच्चारणस्थानेषु अधोभागे निष्पन्नः अच् अनुदात्तसंज्ञः भवति इति सूत्राशयः।

८. यस्मिन् स्वरे उदात्तत्वस्य अनुदात्तत्वस्य च उभयोः वर्णधर्मयोः समाहारः भवति सः अच् स्वरितसंज्ञः भवति।

इत्थम् उदात्तानुदात्तस्वरिताः वर्णधर्माः कथिताः। लब्धह्रस्वदीर्घप्लुतसंज्ञः अच् प्रत्येकम् उदात्तानुदात्तस्वरित रूपभेदत्रयेण त्रिधा सन् नवविधः सञ्जातः। स च नवविधः अच् प्रत्येकम् अनुनासिकत्वधर्मेण अननुनासिकत्वधर्मेण च पुनः द्विधा भवति = द्विप्रकारकः भवति। कोऽयम् अनुनासिकत्वधर्मः ? को वा अनुनासिकः ? इति जिज्ञासायां यथाप्रसङ्गं वक्ष्यते – 'मुखनासिका०' इत्यादि।

९. मुखनासिकावचनः अनुनासिकः। मुखेन सहिता मुखसहिता। मुखसहिता च असौ नासिका, मुखनासिका, शाकपार्थिवादिसमासः उत्तरपदस्य 'सहिता' इत्यस्य लोपश्च। मुखद्वितीया नासिका मुखनासिका इति वा विग्रहः कार्यः। अत्रापि पूर्ववदेव समासः। उच्यते उच्चार्यते इति वचनः, अत्र कर्मणि ल्युट्। मुखनासिकया वचनः इति मुखनासिका वचनः अर्थात् मुखसहितनासिकया अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादशभेदाः। लृवर्णस्य द्वादश तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्।उच्चार्यमाणः वर्णः अनुनासिकसंज्ञः भवति। मुखं विना केवलया नासिकया उच्चारणासंभवात् मुखेन सहिता नासिका इत्युक्तम्। यस्य च केवलेन मुखेन एव उच्चारणं भवति, स वर्णः अननुनासिक कथ्यते। इत्थं स्पष्टं यत् मुखनासिकया उच्चार्यमाणः अनुनासिकः। केवलेन मुखेन – उच्चरितः अननुनासिकः भवति। अत्र मुखं च नासिका च इत्येवं द्वन्द्वसमासः न मन्तव्यः, अनयोः प्राण्यङ्गत्वात् एकवत्त्वस्य, समाहारस्य नपुंसकत्वात् ह्रस्वत्वस्य च आपत्तेः।

इत्थं नवविधः सः अच् अनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा पुनः भवति, अतः अनेन पथा अ इ उ ऋ इत्येते वर्णाः प्रत्येकमष्टादशभेदवन्तः सञ्जाताः। लृवर्णः द्वादशभेदवान्, सः दीर्घः न भवति, अतः अस्य तन्मूलकाः षड्भेदाः न्यूनाः भवन्ति। लृवर्णस्य दीर्घत्वं न भवति, इत्यत्र महाभाष्यमेव प्रमाणम्, होतृ+लृकारः इत्यत्र होतॄकारः इत्येवं दीर्घविधानज्ञापनात्। एवमेव एच्प्रत्याहारगताः ए ओ ऐ औ इत्येते वर्णाः अपि प्रत्येकं द्वादशभेदवन्तः। तेषां ह्रस्वत्वं न भवति, अतः ह्रस्वमूलकाः षड्भेदाः न्यूनाः। अत्र अचां भेदविवरणतालिका द्रष्टव्या –

अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादशभेदाः। लृवर्णस्य द्वादश तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्।

**१०. तुल्यास्यप्रयत्नं सवर्णम् १/१/९**

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसञ्ज्ञं स्यात्। (ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्)। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य। यत्नो द्विधा–आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा–स्पृष्ट–ईषत्स्पृष्ट–ईषद्विवृत–विवृत–संवृतभेदात्। तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्टमन्तः स्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्।

---

| अ इ उ ऋ लृ<br>ह्रस्वभेदाः | अ इ उ ऋ ए ओ ऐ औ<br>दीर्घभेदाः | अ इ उ ऋ लृ ए ओ ऐ औ<br>प्लुतभेदाः |
|---|---|---|
| ह्रस्व–उदात्तानुनासिकः | दीर्घ–उदात्तानुनासिकः | प्लुत–उदात्तानुनासिकः |
| ह्रस्व–उदात्ताननुनासिकः, | दीर्घ–उदात्ताननुनासिकः | प्लुत–उदात्ताननुनासिकः |
| ह्रस्व–अनुदात्तानुनासिकः | दीर्घ–अनुदात्तानुनासिकः | प्लुत–अनुदात्तानुनासिकः |
| ह्रस्व–अनुदात्ताननुनासिकः | दीर्घ–अनुदात्ताननुनासिकः | प्लुत–अनुदात्ताननुनासिकः |
| ह्रस्व–स्वरितानुनासिकः | दीर्घ–स्वरितानुनासिकः | प्लुत–स्वरितानुनासिकः |
| ह्रस्व–स्वरिताननुनासिकः | दीर्घ–स्वरिताननुनासिकः | प्लुत–स्वरिताननुनासिकः |

अत्र दीर्घभेदप्रदर्शकपङ्क्तौ लृकारस्य उल्लेखः नास्ति तथा ह्रस्वभेदप्रदर्शने ए ओ ऐ औ इति वर्णानाम् उल्लेखः नास्ति।

ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव। बाह्यप्रयत्नस्त्वेकादशधा – विवारः, संवारः, श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमाः यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तःस्थाः। शल ऊष्माणः। अचः स्वराः। ⨯ क ⨯ ख इति कखाभ्यां यत्नः वा प्रयत्नः। आस्यं च प्रयत्नः च आस्यप्रयत्नौ। तुल्यौ आस्यप्रयत्नौ यस्य वर्णजालस्य तत् तुल्यास्यप्रयत्नं वर्णजालं परस्परं सवर्णसंज्ञं भवति इति सूत्राशयः। अतः मुखे भवं ताल्वादिस्थानम्, आभ्यन्तरप्रयत्नश्च इति एतद्द्वयं यस्य वर्णस्य येन वर्णेन तुल्यं भवति तौ वर्णौ परस्परं सवर्णौ भवतः। ऋकारलृकारयोः भिन्नस्थानजन्यत्वात् विशेषवचनद्वारा सावर्ण्यं विधीयते 'ऋलृवणयोर्मिथः सावर्ण्यं वाच्यम्' इति।कस्य वर्णस्य किं स्थानं, कश्च प्रयत्नः? इति जिज्ञासायां शिक्षावचनानि अर्थतः संगृह्णाति – अकुहविसर्जनीयानां कण्ठः इत्यादि। अत्र कु चु टु तु पु इति कादिवर्गपञ्चकस्य बोधकाः, अर्थात् कु = क ख ग घ ङ इति। एवमेव चु टु तु पु विषयेऽपि ज्ञेयम्। अ, क, ख, ग, घ, ङ, ह, विसर्गश्च एषां वर्णानाम् उच्चारणस्थानं कण्ठः। इ, च, छ, ज, झ, ञ, य, श एषां स्थानं तालु। ऋ, ट, ठ, ड, ढ, ण, र, ष एषां स्थानं मूर्धा। लृ, त, थ, द, ध, न, ल, स एषां स्थानं दन्ताः। अत्र दन्तशब्देन दन्तमूलं ग्राह्यम्, अन्यथा तु भग्नदन्तस्य एषां वर्णानामुच्चारणमेव न स्यात्। उ, प, फ, ब, भ, म, उपध्मानीयश्च एषां स्थानम् ओष्ठौ। उपध्मानीयः, जिह्वामूलीयः, विसर्गः, अनुस्वारश्च कः इति अग्रे व्याख्यास्यते। ञ म ङ ण न इति प्रतिवर्गं पञ्चमवर्णस्य नासिकाऽपि स्थानमधिकम्। स्वस्ववर्ग्यं स्थानं तु ताल्वादि तेषाम् अस्त्येव, अतः एषां वर्गपञ्चमानां द्वे द्वे स्थाने स्तः इति विज्ञेयम्। एकारस्य ऐकारस्य च कण्ठतालु, ओकारस्य औकारस्य च कष्ठोष्ठम् उच्चारणस्थानम्। वकारस्य दन्तोष्ठं, जिह्वामूलीयस्य जिह्वामूलम्, अनुस्वारस्य च नासिका स्थानमिति वर्णानां स्थानवर्णनम्। प्रसङ्गप्राप्तस्य प्रयत्नस्य विवरणम् – यत्नः द्विधा – आभ्यन्तरःबाह्यश्च। सूत्रे प्रयत्नशब्देन आभ्यन्तरस्य यत्नस्य ग्रहणं बोध्यम्। प्रकृष्टता च तस्य वर्णोच्चारणात् प्राग्भावित्वेन विज्ञेया। बाह्यस्य यत्नस्य बाह्यत्वं तु वर्णोच्चारणानन्तरं तस्य जायमानत्वात् विज्ञेयम् इति शिक्षाग्रन्थेषु स्पष्टम्। तत्र आद्यः = आभ्यन्तरप्रयत्नः पञ्चधा – स्पृष्टम्, ईषत्स्पृष्टम्, ईषद्विवृतम्, विवृतम्, संवृतम् इति। तत्र स्पर्शसंज्ञकानाम् आभ्यन्तरप्रयत्नः

स्पृष्टम्। के स्पर्शाः ? कादयो मावसानाः स्पर्शाः इत्यनुपदमेव वक्ष्यते। अर्थात् लोके यः वर्णक्रमः प्रसिद्धः कवर्गचवर्गटवर्गतवर्गपवर्गरूपः, तत्र ककारात् आरभ्य पवर्गस्य पञ्चमवर्णं यावत् ये पञ्चविशतिः वर्णाः, ते स्पर्शाः इति भावः। ईषत्स्पृष्टम् अन्तःस्थवर्णानां प्रयत्नः। के अन्तःस्थाः ? यणः अन्तःस्थाः। अर्थात् 'यवरल' एषां वर्णानाम् ईषत्स्पृष्टं प्रयत्नः। ईषद्विवृतं प्रयत्नः ऊष्मवर्णानाम्। के ऊष्माणः ? शलः इति। अर्थात् शल्प्रत्याहारगताः शषसहाःवर्णाः ऊष्मसंज्ञकाः, तेषामाभ्यन्तरप्रयत्नः ईषद्विवृतम्। स्वराणां विवृतं प्रयत्नः। के स्वराः ? अचः स्वराः। अर्थात् 'अ इ उ ऋ लृ ए ओ ऐ औ' इति अच्प्रत्याहारान्तर्गताः वर्णाः स्वराः उच्यन्ते, तेषां विवृतं प्रयत्नः। तर्हि संवृतं कस्य प्रयत्नः? इति प्रश्ने आह - ह्रस्वस्य अवर्णस्य प्रयोगे संवृतम्, प्रक्रियादशायां तु तस्य विवृतमेव। अर्थात् यत्र केवलस्य ह्रस्वस्य एकमात्रिकस्य अकारस्य प्रयोगः तत्र तस्य संवृतं प्रयत्नः। यत्र तस्य दीर्घत्वादिप्रक्रियाकार्यं सम्पादनीयं भवति, तत्र तस्य पुनः विवृतमेव प्रयत्नः भवति इति ज्ञेयम्। प्रक्रियायां तस्य यदि विवृतत्वं न भवेत् तर्हि देव+आलयः इत्यत्र ह्रस्वाकारस्य संवृतम्, आकारस्य च विवृतम् इत्येवं प्रयत्नभेदात् तयोः सावर्ण्यं न स्यात् ततश्च सवर्णदीर्घसन्धिः एव तत्र न भविष्यति। प्रक्रियायां तस्य अकारस्य अपि विवृतत्वे तु उभयोः प्रयत्नसाम्यात् सावर्ण्ये न काऽपि बाधा इति भावः।बाह्यप्रयत्नः एकादशधा-तद्यथा-विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्च। तत्र कस्य बाह्यप्रयत्न कः ? इति जिज्ञासायाम् आह - खरो विवारा० इत्यादि। अर्थात् ख फ छ ठ थ च ट त क प श ष स इति खर्प्रत्याहार -गतानां वर्णानां विवारः श्वासः अघोषः इति बाह्यप्रयत्नः। ये खलु हश् प्रागर्धविसर्गसदृशो जिह्वामूलीयः। प फ इति पफाभ्यां प्रागध र्विसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ। प्रत्याहारान्तर्गताः 'ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द' वर्णाः, तेषां तु संवारः नादः घोषः इति बाह्यप्रयत्नः। तत्र पुनः प्रत्येकं वर्गस्य प्रथमः, तृतीयः, पञ्चमः अर्थात् क ग ङ, च ज ञ, ट ड ण, त द न, प ब म इति वर्णाः, यणः = य व र लाः च अल्पप्राणाः भवन्ति। अन्ये तु वर्गाणां द्वितीयचतुर्थवर्णाः ख घ, छ झ, ठ ढ, थ ध, फ भ एते तथा शलः = 'श ष स ह' एते च महाप्राणाः उच्यन्ते अर्थात् क्रमशः पूर्वोक्तानाम् अल्पप्राणः, पश्चादुक्तानां च महाप्राणः बाह्यप्रयत्नः। इत्येवं प्रत्येकं व्यञ्जनस्य चतुर्धा बाह्यप्रयत्नः। उदात्तः अनुदात्तः स्वरितश्च इत्येते तु केवलानां स्वराणामेव धर्माः, न तु व्यञ्जनानाम् इति 'उच्चैरुदात्तः' इत्यादौ स्पष्टम्। इत्थं विवारश्वासाघोषेषु च ट त क प इति वर्णाः अल्पप्राणाः, ख फ छ ठ थ श ष स इति वर्णाः महाप्राणाः। संवारनादघोषेषु य व र ल ञ म ङ ण न ज ब ग ड द इत्यल्पप्राणाः, शेषवर्णाः = ह झ भ घ ढ ध एते महाप्राणाः इति निर्णयः। तत्र स्पर्शादयः के ? इति तु व्याख्यातम्। इदानीं जिह्वामूलीयादिविषये आह - ककारात् खकारात् वा प्राग् अर्धविसर्गसदृशः जिह्वामूलीयः, पकारात् फकारात् वा प्राग् तादृश एव उपध्मानीयः इति उच्यते। अचः परः अनुस्वारः अं, इं इत्यादिरूपः, विसर्गश्च अपि अचः परः अः, इः इत्यादिरूपः शब्दप्रयोगे उपलभ्यते। अर्थात् अनुस्वार विसर्गौ एतादृशौ भवतः इति भावः। वर्णानां सवर्णसंज्ञायां स्थानस्य आभ्यन्तरप्रयत्नस्य च हेतुत्वम् अस्ति, अतः तयोः विवेचनं तु सार्थकं किन्तु बाह्ययत्नस्य तु तत्र सवर्णसंज्ञायाम् उपयोग एव न भवति, अतः तस्य प्रपञ्चः व्यर्थः इति शङ्कायां वक्तव्यम्-बाह्ययत्नस्य सावर्ण्ये उपयोगाभावेऽपि वर्णानां सादृश्यपरीक्षायाम् उपयोगः भवति एव, अतः तदर्थं कृतः अयं प्रपञ्चः सार्थक एव, न व्यर्थः इति।

**११. अणुदित्सवर्णस्य चाप्रत्ययः १/१/६९**

प्रतीयते विधीयते इति प्रत्ययः। अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम् 'अ' इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः एवं लृकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा, तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञा।

**१२. परः सन्निकर्षः संहिता १/४/१०९**

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्।

---

११. **अणुदित् सवर्णस्य च अप्रत्ययः** इति पदच्छेदः। अप्रत्ययः अण् उदित् च सवर्णस्य संज्ञा अर्थात् ग्राहकः भवति। प्रतीयते=विधीयते=यः सूत्रेण क्रियते असौ प्रत्ययः अर्थात् आदेशः आगमः प्रत्ययश्च। यः सूत्रेण न क्रियते न विधीयते आदेशत्वेन आगमत्वेन प्रत्ययत्वेन वा असौ अप्रत्ययः। तादृशः अण् अर्थात् 'अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल' इत्येते वर्णाः सवर्णान् ग्राहयन्ति। यः विधीयमानः अण् आगमरूपः आदेशरूपः प्रत्ययरूपो वा स सर्वणस्य संज्ञा न भवति। किन्तु यः निमित्तरूपः अण्, उद्देश्यरूपो वा अण्, स सवर्णस्य संज्ञा ग्राहकः वा भवति, तस्य अविधीयमानत्वात्। अतः 'इको यणचि' इत्यादौ निमित्तरूपः अच्, उद्देश्यरूपः इक् (उभावपि अणन्तर्गतौ) सवर्णान् ग्राहयतः। एवम् उदित् विधीयमानः अपि सवर्णस्य संज्ञा भवति। के उदितः ? कु चु टु तु पु एते उदितः। अर्थात् एते पञ्चविंशतिः वर्णा विधीयमाना अपि सवर्णान् ग्राहयन्ति। अण् इति परणकारेण पूर्वणकारेण वा इति सन्देहे सति आह–अत्रैवाण्–इति। अर्थात् सम्पूर्णे पाणिनीयतन्त्रे सर्वत्र पूर्वणकारेण
अण् गृह्यते, किन्तु केवले अस्मिन्नेव सूत्रे परणकारेण ग्राह्यः इति व्याख्यानात् ज्ञायते। अतः अत्र सूत्रे 'अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल' इत्येते वर्णाः अण्संज्ञया ज्ञेयाः। अन्यत्र तु 'अ इ उ' इति वर्णत्रयमेव। इत्थम् अविधीयमानः 'अ' अष्टादशानां सवर्णानां संज्ञा। ह्रस्वदीर्घप्लुतमूलकाः भेदाः पूर्वं प्रपञ्चिताः सन्ति, तत्र द्रष्टव्याः। एवमेव इकारः उकारश्चापि अष्टादशानां संज्ञा। ऋकारलृकारयोः सावर्ण्यात् ऋकारः आत्मनः अष्टादशानाम् लृकारस्य च द्वादशानाम् इत्येवं मिलित्वा त्रिंशतः संज्ञा, लृकारः अपि त्रिंशत एव। एचः प्रत्येकं द्वादशानां संज्ञाः। अर्थात् ए ओ ऐ औ प्रत्येकं वर्णः स्वकीयानां द्वादशानां सवर्णानां बोधकः। ए ऐ इत्यनयोः ओ औ इत्यनयोश्च तुल्यस्थानत्वात् विवृतप्रयत्नवत्त्वाच्च सावर्ण्येन एकारः ऐकारस्य, ओकारः औकारस्य बोधकः, तस्मात् एकारः ओकारश्च चतुर्विंशतेः संज्ञकः इति शंका न करणीया, यतो हि एकारऐकारयोः ओकार–औकारयोः सावर्ण्याभावस्य ''ऐ औ च्'' इति सूत्रस्य पृथक्करणात् ज्ञापितत्वात्। सति सावर्ण्ये तु 'ए ओ ङ्' इति एकेनैव सूत्रेण सिद्धे 'ऐ औ च्' इति व्यर्थमेव स्यादिति भावः।

यवलाः अनुनासिकाः अननुनासिकाश्च भवन्ति। अतः अननुनासिकाः अपि यवलाः प्रत्येकं द्वयोः द्वयोः संज्ञा। अर्थात् य् इति अनुनासिकस्य अननुनासिकस्य च बोधकः। एवमेव वकारः लकारश्चापि।

१२. संहितासंज्ञाविधायकं सूत्रमिदम्। परः=अतिशयितः, सन्निकर्षः = सामीप्यम् =अर्धमात्राधिककालव्यवधानाभावः। अर्धमात्राकालस्य व्यवधानं तु अवर्जनीयम्। अतः अर्धमात्राधिककाल व्यवधानाभावेन वर्णानां सामीप्यं संहितासंज्ञं भवति, अर्थात् वर्णानाम् उच्चारणे अतिशयितसामीप्यमेव संहिता इति सिद्धम्।

१३. **हलोऽनन्तराः संयोगः १/१/७**
अज्भिरव्यवहिताः हलः संयोगसंज्ञाः स्युः।

१४. **सुप्तिङन्तं पदम् १/४/१४**
सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।

**इति संज्ञाप्रकरणम्**

---

१३. **हलोऽनन्तराः संयोगः** सूत्रमिदं संयोगसंज्ञाविधायकम्। अज्भिः = स्वरसंज्ञकैः वर्णैः अव्यवहिताः = व्यवधानरहिताः हलः=व्यञ्जनवर्णाः संयोगसंज्ञकाः भवन्ति।

१४. सुप् इति 'स्वौजसमौट्०' इति सूत्रगतप्रत्ययानाधारीकृत्य प्रत्याहारः, तिङ् इत्यपि ''तिप्तस्झि०'' इत्याधारीकृत्य प्रत्याहार एव। सुप्प्रत्ययः अन्ते यस्य, तिङ् प्रत्ययः वा अन्ते यस्य तत् सुबन्तं तिङन्तम्। तादृशं सुबन्तं तिङन्तं च पदसंज्ञकं भवति। अर्थात् अनेन सूत्रेण पदसंज्ञा विधीयते। रामः, देवी, वधूः, चित्रम् इत्यादयः सुबन्ताः। पठति, एधते, अपाठीत्, भविष्यति इत्यादयः तिङन्ताः शब्दाः।, अतः एते पदसंज्ञकाः सन्तीति भावः।

**इति संज्ञाप्रकरणम्**

**अभ्यासप्रश्नाः**

१. उपदेशे अन्त्यम् इत् भवति –

| | | |
|---|---|---|
| (क) अच् | (ख) हल् | |
| (ग) विसर्गः | (घ) अनुस्वारः | ( ) |

२. इत्संज्ञकस्य लोपं करोति –

| | | |
|---|---|---|
| (क) हलन्त्यम् | (ख) अदर्शनं लोपः | |
| (ग) तस्य लोपः | (घ) उपदेशेऽजनुनासिक इत् | ( ) |

३. मुखनासिकया उच्चार्यमाणः वर्णः भवति–

| | | |
|---|---|---|
| (क) अनुस्वारः | (ख) व्यञ्जनम् | |
| (ग) अनुनासिकः | (घ) स्वरः | ( ) |

४. ऊष्मवर्णाः सन्ति –

| | | |
|---|---|---|
| (क) शषसहाः | (ख) यवरलाः | |
| (ग) कादयो मावसानाः | (घ) अचः | ( ) |

५. बाह्ययत्नः भवति

| | | |
|---|---|---|
| (क) पञ्चधा | (ख) षोढा | |
| (ग) दशधा | (घ) एकादशधा | ( ) |

६. स्पर्शानां प्रयत्नः भवति

| | |
|---|---|
| (क) स्पृष्टम् | (ख) ईषद्विवृतम् |

(ग) विवृतम् (घ) संवृतम् ( )

७. लृवर्णस्य भेदा: भवन्ति –

(क) द्वादश (ख) अष्टादश

(ग) त्रिंशत् (घ) षोडश ( )

८. ऋकार: संज्ञा भवति –

(क) अष्टादशानाम् (ख) त्रिंशत:

(ग) विंशते: (घ) द्वादशानाम् ( )

९. अनन्तरा: हल: भवन्ति –

(क) संहितासज्ञा: (ख) संयोगसंज्ञा:

(ग) पदसंज्ञा: (घ) विसर्गसंज्ञा: ( )

१०. उदात्तानुदात्तस्वरिता: बाह्ययत्ना: भवन्ति –

(क) अचाम् (ख) खराम्

(ग) हशाम् (घ) वर्णमात्रस्य ( )

**लघूत्तरात्मका: प्रश्ना: –**

११. माहेश्वरसूत्राणि कति ? तानि लिखत।

१२. कीदृश: हल् इत्संज्ञक: भवति ?

१३. हलन्त्यम् इति सूत्रस्य अर्थं लिखत।

१४. कस्य अच: कियन्त: भेदा: ? लिखत।

१५. कौ वर्णौ मिथ: सवर्णौ भवत: ? तत्र नियम: क: ?

१६. अकारस्य प्रयत्न: क: ? प्रक्रियादशायां च क: ?

१७. जिह्वामूलीय: वर्ण: क: ?

१८. के सवर्णस्य संज्ञा: भवन्ति ?

## अथ अच्सन्धिः

१५. **इको यणचि ६/१/७७**
इकः स्थाने यण् स्यादचि संहितायां विषये। सुधी+उपास्यः इति स्थिते

१६. **तस्मिन्निति निर्दिष्टे पूर्वस्य १/१/६६**
सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्।

१७. **स्थानेऽन्तरतमः १/१/५०**
प्रसङ्गे सति सदृशतमः आदेशः स्यात्। सु ध् य् + उपास्यः इति जाते।

---

सन्धिः मेलनम्। द्वयोः वर्णयोः यत्र मेलनं भवति, तत्र एकस्य वर्णस्य उभयोः वा ध्वनिपरिवर्तनं सामान्यतया जायते। यत्र उभौ वर्णौ स्वरौ भवतः, तयोः मेलनं स्वरसन्धिः अच्सन्धिः वा उच्यते। तत्र प्रथमं तावत् यण्सन्धिः विचार्यते–

१५. **इको यणचि** – इकः यण् अचि इतिच्छेदः। इकः इति षष्ठ्यन्तं पदम् उद्देश्यम्। यण् इति प्रथमान्तं विधीयमानत्वात् विधेयभूतम्। अचि इति सप्तम्यन्तं निमित्तम्। यत् क्रियते तत् विधेयम्, यस्य क्रियते तद् उद्देश्यम्, यत्सम्बन्धेन क्रियते तद् निमित्तम्। इक् इति प्रत्याहारः, तत्र 'इ उ ऋ लृ' इति वर्णाः। यण् इत्यपि प्रत्याहारः तत्र 'य व र ल' इति वर्णचतुष्कम्। अच् प्रत्याहारे 'अ इ उ ऋ लृ ए ओ ऐ औ' इति वर्णाः। वर्णानाम् अतिशयितसन्निधिविषये इकः स्थाने यण् विधीयते अचि परे इति सूत्राशयः। 'सुधी+उपास्यः इत्यवस्थायाम् क्रमशः उ, ई, उ इति वर्णत्रयम् इक्रूपम्, तेभ्यश्च परतः क्रमशः ई, उ आ इति अच्प्रत्याहारगताः वर्णाः सन्ति। अतः एतादृश्याम् दशायां कतमस्य इकः स्थाने यण् विधेयः इति शंकायाम् – व्यवस्थापकं परिभाषासूत्रम् अवतारयति – **तस्मिन्निति।**

१६. **तस्मिन् इति निर्दिष्टे पूर्वस्य** इतिच्छेदः। इदं परिभाषासूत्रम्। अस्य अयमर्थः–सप्तमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेण व्यवधानशून्यस्य पूर्वस्य उद्देश्यस्य कर्तव्यम्। 'इको यणचि' इत्यत्र 'अचि' इति सप्तमीनिर्देशः। सुधी+उपास्यः इत्यत्र अचः (निमित्तात्) व्यवधानशून्यः पूर्ववर्ती इक् धकारोत्तरवर्ती ईकारः एव अस्ति। 'अतः' तस्यैव यण् विधेयः नान्ययोः इकोः, तयोः अचः अव्यवहितपूर्वत्वाभावात्।

**अत्र पुनः शंका** – उद्देश्यविषये जातेऽपि समाधाने विधेयविषये पुनः प्रश्नः – यण् इति प्रत्याहारे 'यवरलाः' इति चत्वारः वर्णाः सन्ति। तत्र ईकारस्य स्थाने एषु कतमः विधेयः? सर्वे वा पर्यायेण स्युः? अतः व्यवस्थाकपम् अन्यत् परिभाषासूत्रं – ''स्थानेऽन्तरतमः'' इति अवतारयति।

१७. 'स्थाने' इत्यस्य 'प्रसङ्गे' इत्यर्थः। एकस्य स्थानिनः स्थाने बहूनाम् आदेशानां प्राप्तिप्रसङ्गे स्थानिना अन्तरतमः=सदृशतमः आदेशः विधेयः इति व्यवस्था। प्रकृतप्रयोगे ईकारस्य स्थाने यवरलेषु यकार एव यण् भवति, ईकारयकारयोः स्थानकृतसादृश्यात्। इत्थं 'सुधी+उपास्यः' इत्यत्र उक्तपरिभाषासूत्रद्वयसहायतया ''इको यणचि'' इति सूत्रेण ईकारस्य स्थाने यकाररूपे यणादेशे कृते 'सु ध् य् + उपास्यः' इति स्थितिः जाता। मधु+अरिः इत्यत्र उकारस्य सदृशतमः वकारः, धातृ+अंशः इति ऋकारस्य सदृशतमः रकारः, लृ+आकृतिः इत्यत्र लृकारस्य सदृशतमः लकाररूपयणादेशः भवति। अतः मध्वरिः, धात्रंशः, लाकृतिः इत्यादयः प्रयोगाः सिध्यन्ति।

१८. **अनचि च ८/४/४७**
अच: परस्य यरो द्वे वा स्त: न त्वचि। इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य: इति जाते।

१९. **झलां जश् झशि ८/४/५३**
स्पष्टम्। इति पूर्वधकारस्य दकार:।

२०. **संयोगान्तस्य लोप: ८/२/२३**
संयोगान्तं यत्पदं तदन्तस्य लोप: स्यात्।

२१. **अलोऽन्त्यस्य १/१/५२**
षष्ठीनिर्दिष्टोऽन्त्यस्याल: आदेश: स्यात्। इति यलोपे प्राप्ते
(यण: प्रतिषेधो वाच्य:) सुद्ध्युपास्य: । मद्ध्वरि: । धात्त्रंश: । लाकृति: ।

---

१८. अत्र 'यरोऽनुनासिकेऽनुनासिको वा' इति सूत्रात् 'यर:' 'वा' इति पदद्वयम् ''अचोरहाभ्यां द्वे' इति सूत्रात् च 'अच:' 'द्वे' इति पदद्वयम् अनुवर्तते। न अचि इति अनचि अर्थात् अज्भिन्ने वर्णे। अच: परस्य यर: विकल्पेन द्वित्वं भवति अज्भिन्ने अर्थात् व्यञ्जने वर्णे परे इति सूत्राशय:। यर् इति प्रत्याहार: तत्र 'ह' वर्णं परित्यज्य सर्वाणि व्यञ्जनानि भवन्ति। सुध् य् + उपास्य: इत्यत्र उकारात् परस्य धकाररूपस्य यर: अनेन सूत्रेण द्वित्वं भवति यतो हि तस्मात्पर: अज्भिन्न: वर्ण: यकार: विद्यते। अत: सु ध् ध् य् + उपास्य: इति स्थिति:।

१९. **झलां जश् झशि** इति सूत्रं स्पष्टार्थकम्, अत: स्पष्टम् इति उक्तम्। झल्प्रत्याहारगतानां वर्णानां स्थाने जश् = ज ब ग ड द एषु यथायोग्यं आदेश: भवति, झशि = झ भ घ ढ ध ज ब ग ड द इत्येतेषु वर्णेषु परेषु सत्सु। अनेन सूत्रेण सु ध् ध् य् इत्यत्र पूर्वधकाररूपस्य झल: स्थाने तवर्गतृतीय: दकाररूप: जशादेश: विधीयते द्वितीये धकारे (झशि) परे। अत: सुद्ध् य् + उपास्य: इति दशा सञ्जाता। तत्र ...

२०. संयोगान्तस्य पदस्य लोप भवति इत्यर्थकेन अनेन सूत्रेण सम्पूर्णस्य सुद्ध्य् इति पदस्य लोप: प्राप्त:, अस्य संयोगान्तत्वात्। अत: सम्पूर्णस्य लोप: न स्यात् एतदर्थम् अन्यां व्यवस्थां सम्पादयन् परिभाषासूत्रमवतारयति – 'अलोऽन्त्यस्य' इति ---

२१. **अल: अन्त्यस्य** इतिच्छेद:। विधीयमान: आदेश:, विधिसूत्रे षष्ठ्यन्तपदेन निर्दिष्टस्य = बोधितस्य य: अन्त्य: अल्, तस्य अल: (अन्त्यस्य अल:) स्थाने स्यात् इति सूत्रस्याशय:। 'संयोगान्तस्य लोप:' इति विधिसूत्रम्। अत्र षष्ठ्यन्तं पदं 'संयोगान्तस्य' इति, एतेन निर्दिष्टं सु द् ध् य् इति पदम्, अस्य च अन्त्य: अल् यकार:, तस्य स्थाने विधायकसूत्रेण विधीयमान: लोपात्मक: आदेश: स्यात्। इत्येवं सुद्ध य् इत्यत्र यकारस्य लोप: प्राप्त:। 'यण: प्रतिषेधो वाच्य:' इति वार्तिकेन अन्त्यस्य यण: लोप: प्रतिषिध्यते। अत: सुद्ध्य् इत्यत्र अन्त्यस्य यकारस्य यण्त्वात् लोपनिषेधात् सुद्ध्युपास्य: इति सिद्ध्यति।

**रूपसिद्धिलेखनप्रकार: –**

सुधी+उपास्य: इत्यत्र ''तस्मिन्निति निर्दिष्टे पूर्वस्य'' ''स्थानेऽन्तरतम:'' इति सूत्रद्वयसहकारेण ''इको यणचि'' इति सूत्रेण धकारात्परस्य ईकारस्य यणि यकारे कृते सु ध् य् + उपास्य: इति जाते 'अनचि च' इति सूत्रेण 'धकारस्य विकल्पेन द्वित्वे कृते सुध् ध् य् + उपास्य: इति स्थिते ''झलां जश् झशि'' इति सूत्रेण पूर्वधकारस्य जश्त्वेन दकारे कृते सु द् ध् य् + उपास्य: इत्यवस्थायाम् ''अलोऽन्त्यस्य''

२२.　**एचोऽयवायावः ६/१/७८**

एचः क्रमादय् अव् आय् आव् एते स्युरचि।

२३.　**यथासङ्ख्यमनुदेशः समानाम् २/३/१०**

समसम्बन्धी विधिर्यथासंख्यं स्यात्। हरये। विष्णवे। नायकः। पावकः।

---

इति सूत्रसहायतया ''संयोगान्तस्य लोपः'' इत्यनेन सूत्रेण अन्त्यस्य यकारस्य लोपे प्राप्ते ''यणः प्रतिषेधो वाच्यः'' इति वार्तिकेन निषेधे कृते वर्णसम्मेलने सति सुद्ध्युपास्यः इति रूपं सिद्धम्। द्वित्वाभावपक्षे सुध्युपास्यः इति द्वितीयं रूपं निष्पन्नम्। एवमेव-मधु+अरिः - म ध् व् अरिः - मध् ध् व् अरिः - मद्ध्व्अरिः - मद्ध्वरिः, मध्वरिः इति। धातृ + अंशः - धात्र्+अंशः - धा त् त् र् + अंशः - धात्त्रंशः, धात्रंशः। लृ+आकृतिः- ल्+आकृतिः-लाकृतिः इत्यादि रूपाणि सिध्यन्ति।

**अन्यानि उदाहरणानि -**

प्रति+एकम् = प्रत्येकम्। हरि+अनुभवः हर्यनुभवः। यदि + अपि = यद्यपि। तरु+अरिः = तर्वरिः। गुरु+आगमनम् = गुर्वागमनम्। चारु+अङ्गी=चार्वङ्गी। सु+आगतम्=स्वागतम्। पितृ+आज्ञा=पित्राज्ञा। कर्तृ+आयुः=कर्त्रायुः। लृ+अनुबन्धः=लनुबन्धः। घस्लृ+आदेशः = घस्लादेशः इत्यादीनि रूपाणि।

२२.　**एचः अय् अव् आय् आवः** इतिच्छेदः। अत्र 'इको यणचि' इति सूत्रात् 'अचि' इति पदम् अनुवर्तते। एचः (ए ओ ऐ औ) इति उद्देश्यभूताः, अयादयःचत्वारः विधेयाः 'अचि' इति निमित्तपदम्। अतः अचि परे एचः स्थाने अयादयः स्युः इति सूत्रार्थः। अत्र चत्वारः स्थानिनः चत्वार एव आदेशाः। तत्र प्रथमस्य द्वितीयः, द्वितीयस्य प्रथमः अन्यः वा न स्याद् एतदर्थं व्यवस्थापकं सूत्रम् अवतारयति - यथासंख्यमिति-

२३.　**यथासङ्ख्यम् अनुदेशः समानाम्।** समाः=समानसंख्याकाः सम्बन्धिन उद्देश्यविधेयाः स्थान्यादेशाः वा। यस्य सः विधिः=समसम्बन्धी विधिः, तत्र आदेशाः यथासंख्यं = क्रमशः स्युः। अर्थात् 'एचोऽयवायावः' इत्यत्र एच् इत्यस्य 'ए ओ ऐ औ' इति यः क्रमः, तदनुसारमेव अयादयः अपि क्रमशः स्युः। अतः प्रथमस्य एकारस्य अय्, द्वितीयस्य ओकारस्य अव्, तृतीयस्य ऐकारस्य आय्, चतुर्थस्य औकारस्य आव् आदेशः भवति इति व्यवस्था।

**उदाहरणानां विश्लेषणम् -**

हरे + ए, विष्णो + ए, नै+अकः, पौ+अकः इत्यत्र पूर्वत्र क्रमशः ए, ओ, ऐ औ सन्ति, तेभ्यः परतः अच्वर्णाः क्रमशः ए, ए, अ, अ इति सन्ति। अतः एचः स्थाने क्रमशः अय् अव् आय् आव् आदेशाः भवन्ति। अतः हर् अय् ए, = हरये, विष्ण् अव् ए = विष्णवे, न् आय् अकः = नायकः, प् आव् अकः=पावकः इति रूपाणि सिध्यन्ति।

**रूपसिद्धिलेखनप्रकारः -**

हरे + ए इत्यत्र ''यथासंख्यमनुदेशः समानाम्'' इति सूत्रसहकारेण ''एचोऽयवायावः'' इति सूत्रेण रकारात् परस्य एकारस्य स्थाने अय् आदेशे कृते हर् अय् ए इति स्थितौ वर्णसम्मेलने कृते 'हरये' इति रूपं सिद्ध म्। एवमेव विष्णो+ए - विष्ण् अव् ए - विष्णवे। नै + अकः - न् आय् अकः = नायकः। पौ+अकः = प् आव् अकः = पावकः।

२४. **वान्तो यि प्रत्यये ६/१/७९**
यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गव्यम्। नाव्यम्।
(अध्वपरिमाणे च) गव्यूतिः।

२५. **अदेङ्गुणः १/१/२**
अत् एङ् च गुणसंज्ञः स्यात्।

२६. **तपरस्तत्कालस्य १/१/७०**
तः परो यस्मात् स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात्।

---

**अन्यानि उदाहरणानि -**

कपे+ए = कपये, रवये। रामे+ओः = रामयोः। भानो+ए = भानवे, गुरवे। गौ+औ =गावौ। रै+औ=रायौ इत्यादीनि।

२४. 'यि' इति 'प्रत्यये' इति पदस्य विशेषणम्। 'यि' इत्यस्य यकारादौ इत्यर्थः। यकारः आदौ यस्य स यकारादिः। तादृशे यकारादौ प्रत्यये परे ओत् = ओकारस्य औत् = औकारस्य च स्थाने वान्तादेशौ भवतः। कौ वान्तौ ? इति जिज्ञासायां वक्तव्यम् - 'एचोऽयवायावः' इत्यत्र ये चत्वारः आदेशाः अयादयः सन्ति, तेषु अव् आव् इति द्वौ वान्तौ स्तः, तौ अत्र ग्राह्यौ। अतः ओकारस्य औकारस्य च क्रमशः अव् आव् एतौ स्तः यकारादौ प्रत्यये परे इति सूत्रार्थः फलितः।

**उदाहरणस्य विश्लेषणम् -**

गो + यम्, नौ + यम् इत्यत्र ओकारात् औकारात् च परौ 'यम्' इति शब्दौ, तत्र यः यकारः स प्रत्ययस्य अस्ति उभयत्रापि। अतः यकारादिप्रत्ययः परः वर्तते, अतः ओकारस्य अव् आदेशः औकारस्य च आव् आदेशः भवति। अतः ग् अव् यम् = गव्यम् इति, न् आव् यम् = नाव्यम् इति रूपद्वयं सिद्ध्यति।

**रूपसिद्धिलेखनप्रकारः -**

गो + यम् इत्यत्र 'वान्तो यि प्रत्यये' इति सूत्रेण गकारोत्तरस्य ओकारस्य स्थाने अवादेशे कृते ग् अव् यम् इति जाते वर्णसम्मेलने च कृते गव्यम् इति रूपं सिद्धम्। नौ+यम् इत्यत्र औकारस्य आव् आदेशे न् आव् यम् = नाव्यम् इति रूपम्।

**वार्तिकम् - (अध्वपरिमाणे च)** अध्वा = मार्गः, तस्य परिमाणविशेषे वाच्ये यूतिशब्दे परे गोशब्दस्य यः ओकारः, तस्य अवादेशः वक्तव्यः इति वार्तिकाशयः।

**गव्यूतिः** गो+यूतिः इत्यत्र ''अध्वपरिमाणे च' इति वार्तिकेन यूतिशब्दे परे ओकारस्य अवादेशे कृते 'ग् अव् यूतिः' इति स्थितौ वर्णसम्मेलने 'गव्यूतिः' इति रूपं निष्पन्नम्।

**विशेषः** - गव्यूतिः इति क्रोशद्वयस्य वाचकः। क्रोशद्वयस्य अध्वपरिमाणविशेषत्वात् गव्यूतिशब्दस्यापि मार्गपरिमाणवाचकत्वमेव।

२५. गुणसंज्ञाविधायकं सूत्रम् एतत्। अत् = ह्रस्वः अकारः एङ् = ए ओ इति च गुणसंज्ञका भवन्ति, अर्थात् 'अ' ए ओ इति वर्णत्रयम् अस्मिन् शास्त्रे 'गुणः' उच्यते। एषां त्रयाणां वर्णानां गुणसंज्ञा अस्ति इति भावः। गुणेन एषाम् एव ग्रहणं भविष्यति इति तात्पर्यम्।

**अत्र प्रश्नः** 'अदेङ् गुणः' इत्यत्र 'अत्' इत्येवं तकारसहितस्य अकारस्य ग्रहणं किमर्थम् ? कथन्न 'अ एङ् गुणः' इत्येवं सूत्रं रचितम् ? अतः उत्तरति सूत्रद्वारा - 'तपरस्तत्कालस्य' इति

२६. **'तपरः तत्कालस्य'** इतिच्छेदः। तपरः इति पदे द्वौ समासौ बहुव्रीहिः तत्पुरुषश्च। तः परः यस्मात् स तपरः, बहुव्रीहिः अयम्। तात्परः तपरः इति पञ्चमीतत्पुरुषः। इत्थं तपरशब्दस्य अर्थद्वयं भवति तः परः यस्मात् सः, तात्परश्च यः, स तत्कालस्य संज्ञा = बोधकः भवति। तत्कालस्य इत्युक्तेःकिम् ? तपरत्वेन उच्चार्यमाणः

२७. **आद् गुणः ६/१/८७**

अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्। उपेन्द्रः। गङ्गोदकम्।

---

यः वर्णः, तस्य यः कालः, तत्कालेन सदृशः कालः यस्य, तस्यैव तपरः संज्ञा इति। यथा 'अदेङ् गुणः' इत्यत्र'अ' इति तपरः, तः परः यस्मात् इति बहुव्रीहिं समाश्रित्य तथा एङ् इत्यपि तपरः, तात्परः इति तत्पुरुषमाधारीकृत्य। अतः 'अ' इति तपरः, स्वसमानकालस्यैव बोधकः। अस्य च एकमात्रिकत्वात् ह्रस्वसंज्ञकत्वात्, अयम् अकार ह्रस्वमूलकानां षण्णाम् एव अकारादीनां बोधकः अतः ह्रस्व अकार एव गुणसंज्ञकः, न पुनः दीर्घप्लुतौ अपि। एवमेव 'एङ् इति अपि तपरः। अतः स अपि स्वसमकालस्य एव संज्ञा। अत्र च एङ् इति 'ए ओ' द्वौ वर्णौ। एतौ ह्रस्वौ न भवतः, स्वभावतः दीर्घौ। अनयोः तपरत्वात् एतौ दीर्घाणाम् षण्णां भेदानां बोधकौ, न प्लुतानामपि। अतः दीर्घयोः एव 'ए ओ' इत्यनयोः गुणसंज्ञा, न प्लुतयोः इति व्यवस्था। एषा च व्यवस्था तपरत्वेन एव विहिता। यदि हि अत्र सूत्रे तपरत्वं नाकरिष्यत् तदा तु 'अणुदित्सवर्णस्य चाप्रत्ययः' इति सूत्रदिशा अकारेण अष्टादशानां ग्रहणात् आकारस्यापि गुणसंज्ञा, एङ् इत्यनेन च द्वादशानां ग्रहणात् ए ओ प्लुतयोः अपि गुणसंज्ञा अभविष्यत् इति भावः।

२७. आत् इति 'अ' इत्यस्य पञ्चम्येकवचनम्। 'अ' इति अविधीयमानत्वात् सवर्णान् ग्राहयति अतः अकारात् आकारात् च अचि परे पूर्वपरयोः (पूर्वस्य अकारस्य परस्य च अचः) स्थाने गुणरूपः एकादेशः भवतिः। एकादेशः इत्युक्तेः द्वयोः स्वरयोः स्थाने एकःस्वर भवति। स च किंरूपः ? अत उच्यते गुणरूपः। गुणः किंरूपः? अ ए ओ इत्येतेषु अन्यतमरूपः 'अदेङ्गुणः' इति सूत्रात्।

**उदाहरणविश्लेषणम् –**

उप+इन्द्रः = उपेन्द्रः। गङ्गा + उदकं=गङ्गोदकम्। उप+इन्द्रः इत्यत्र ''आद्गुणः'' इत्यनेन गुणः विधीयते। कयोः स्थाने ? पूर्वपरयोः। कौ पूर्वपरौ ? पकारोत्तरवर्ती अकारः इन्द्रशब्दस्य आदौ स्थितः इकारश्च पूर्वपरौ, तयोः स्थाने गुणरूपः एकादेशः विधेयः। 'अदेङ् गुणः' इति सूत्रात् 'अ ए ओ' इति गुणसंज्ञकं वर्णत्रयम्। अत्र पूर्वपरयोः स्थाने एषु त्रिषु कतमः गुणः स्यात् ? इति प्रश्ने 'स्थानेऽन्तरतमः' इति सूत्रानुसारं सदृशतमः आदेशः स्यात्, इत्युत्तरम्। अत्र हि पूर्वपरयोः स्थानिनोः अकार – इकारयोः क्रमशः कण्ठः तालु इति उच्चारणस्थाने स्तः। प्रसङ्गप्राप्तेषु गुणसंज्ञकेषु 'ए' इत्यस्य कण्ठतालु स्थानम्। अतः ताभ्यां स्थानिभ्यां तुल्यः एकाररूपः गुणः एव भवति अतः उप् (अ+इ = ए)न्द्रः = उपेन्द्रः इत्येवं रूपम् निष्पद्यते। गङ्गोदकम् इत्यत्र गङ्गा+उदकम् इति पदच्छेदे आकार–उकारयोः क्रमशः कण्ठः औष्ठौ च स्थाने स्तः, गुणसंज्ञकेषु च ओकारस्य कण्ठोष्ठस्थानत्वात् तयोः स्थाने ओकाररूपः गुणैकादेशः भवति।

**रूपसिद्धिलेखनप्रकारः –**

उपेन्द्रः – उप+इन्द्रः इत्यत्र ''अदेङ्गुणः'' इति सूत्रेण 'अ ए ओ' इत्येतेषां गुणसंज्ञायां कृतायाम् ''आद्गुणः'' इति सूत्रेण पकारोत्तरवर्तिनः अकारस्य इन्द्रशब्दगतस्य इकारस्य च स्थाने एकाररूपे गुणे एकादेशे (एकाररूपगुणैकादेशे) कृते उप् ए न्द्रः = उपेन्द्रः इति सिद्धम्।

**अन्यानि उदाहरणानि –**

रमा+ईशः = रमेशः, गण+ईशः=गणेशः, महा+ईशः=महेशः महेन्द्रः, नरेन्द्रः, महा+उपाध्यायः = महोपाध्यायः, कुल+उद्भवः = कुलोद्भवः, कुल+उत्पन्नः = कुलोत्पन्नः, जल+उद्गमः = जलोद्गमः। पर्व+उत्सवः= पर्वोत्सवः, विवाहोत्सवः इत्यादीनि।

२८. **उपदेशेऽजनुनासिक इत् १/३/२**

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः।लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा।।

२९. **उरण् रपरः १/१/९१**

ऋ इति त्रिंशतः संज्ञेत्युक्तम्। तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते। कृष्णर्द्धिः। तवल्कारः।

---

२८ **उपदेशे अच् अनुनासिक इत्** इतिच्छेदः। उपदेशः आद्योच्चारणम् इति 'हलन्त्यम्' इति सूत्रे प्रपञ्चितम्। उपदेशे य अनुनासिकः अच् स इत्संज्ञः भवति इति सूत्रार्थः। आद्याः पाणिन्यादयः क्व क्व अचः अनुनासिकान् कृतवन्तः ? कथञ्च आधुनिकैः ज्ञातुं शक्यते यदसौ अच् अनुनासिक इति? अत आह – 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' इति। अर्थात् गुरुशिष्यपरम्परया ज्ञायते यदयमच् अनुनासिकः, अयञ्च अननुनासिकः इति। परम्परागतः येषाम् अचाम् इत्संज्ञा लोपश्च क्रियमाण अस्ति, ते वर्णाः पाणिनिना प्रोक्ताः अनुनासिकधर्मवन्तः सन्तीति अभ्युपगच्छन्ति आधुनिकाः इति भावः। लण् इति षष्ठे माहेश्वरसूत्रे लकारात्परः यः अकारः तस्य अनुनासिकत्वप्रतिज्ञया इत्संज्ञां विधाय ('उपदेशेऽजनुनासिक इत्' सूत्रेण) तेन इता सह उच्चार्यमाण हयवरट् सूत्रस्थः 'र् अ' इत्येवं रकारः (रप्रत्याहारः) मध्यगस्य लस्य, स्वस्य च संज्ञा=बोधकः सन् र् ल् इति वर्णद्वयं ग्राहयति। अर्थात् र ग्रहणेन रकारस्य लकारस्य च उभयस्य ग्रहणं भवति इत्याशयः।

२९. ऋ इति वर्णस्य षष्ठ्येकवचने उः इति रूपम्। उः अण् रपरः इति सूत्रस्य पदच्छेदः। रः परः यस्मात् सः रपरः। ऋ इति त्रिंशद्भेदानां संज्ञा इति पूर्वमुक्तम् अस्ति। अष्टादशभेदाः ऋकारस्य, द्वादश लृकारस्य। तयोः ऋलृवर्णयोः सावर्ण्यात् ऋकारः आत्मनः, सवर्णिनश्च लृकारस्य आहत्य त्रिंशद्भेदान् ग्राहयति। अतः ऋस्थाने (लृस्थाने च) यस्य अणः (अ इ उ) विधानं भवति, स अण् रपरः सन् तत्र प्रवर्तते। रपरः इत्यत्र 'र' इति पूर्वोक्तदिशा प्रत्याहारः रलयोः बोधकः। अतः ऋस्थाने विधीयमानः अण् रपरः भवति, लृकारस्य स्थाने विधीयमानः अण् लपरः भवति इति व्यवस्था।

**उदाहरणविश्लेषणम् –**

कृष्ण + ऋद्धिः इत्यत्र 'आद्गुणः' इत्यनेन अकारऋकारयोः स्थाने विधीयमानः अकाररूपः गुणैकादेशः ऋकारस्य स्थाने विधीयमानत्वात् रपरः सन् कृष्ण् अर् द्धि इत्येवं प्रवर्तते, वर्णसम्मेलने रेफस्य च जलतुम्बिकान्यायेन ऊर्ध्वगमने कृष्णर्द्धिः इति सिद्धिः भवति। एवमेव

तव+लृकारः इत्यत्र ऋकारेण लृकारस्य अपि सावर्ण्यवशात् ग्रहणेन गुणैकादेशे अकाररूपे तव् अ कारः इत्यत्र 'उरण् रपरः' इत्यनेन रकारेण लकारस्यापि ग्रहणात् लपरत्वे तव् अल् कारः इति जाते वर्ण सम्मेलने तवल्कारः इति रूपं सिध्यति।

**रूपसिद्धिलेखनप्रकारः –**

**१. कृष्णर्द्धिः –**

कृष्ण+ऋद्धिः इत्यत्र ''अदेङ् गुणः'' इत्यनेन 'अ ए ओ' इति वर्णत्रयस्य गुणसंज्ञात्वात् 'आद्गुणः' इति सूत्रेण णकारोत्तरवर्तिनः अकारस्य ऋद्धिशब्दगतस्य ऋकारस्य च स्थाने अकाररूपे गुणैकादेशे '' ''उरण् रपरः'' इति सूत्रेण रपरत्वे च कृते कृष्णअर् द्धिः इत्यवस्थायां वर्णसम्मेलने रेफस्य जलतुम्बिकान्यायेन ऊर्ध्वगमने 'कृष्णर्द्धिः' इति सिद्धम्।

**२. तवल्कारः–**

तव+लृकारः इत्यत्र 'आद्गुणः' इति सूत्रेण वकारोत्तरवर्तिनः अकारस्य लृकारस्य च उभयोः स्थाने 'अ ए ओ' इति गुणसंज्ञकेषु अकाररूपे गुणैकादेशे ''उरण् रपरः'' इति सूत्रेण लपरत्वे तव् अल् कारः वर्णसम्मेलने च कृते तवल्कारः इति रूपं निष्पन्नम्।

३०.    **लोपःशाकल्यस्य ८/३/१९**
अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे।

३१.    **पूर्वत्रासिद्धम् ८/२/१**
सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्। हर इह, हर यिह। विष्ण इह, विष्णविह।

---

**अन्यानि उदाहरणानि –**

देव+ऋषिः = देवर्षिः। महा+ऋषिः = महर्षिः। ग्रीष्म + ऋतुः = ग्रीष्मर्तुः। सप्त + ऋषयः = सप्तर्षयः। मम : लृकारः = ममल्कारः। ह्रस्वस्य + लृकारस्य = ह्रस्वस्यल्कारः

**३०.** पदस्य अन्ते स्थितयोः अवर्णपूर्वयोः यकारवकारयोः अशि परे शाकल्यस्य मते लोपः भवति। अश् इति प्रत्याहारः अइउण् इत्यकारादारभ्य जबगडदश् इति शकारं यावत्। पाणिनिमते तु लोपः न भवति, अतः वैकल्पिकः अयं लोपः। यथा हरे+इह, विष्णो + इह इत्यत्र ''एचोऽयवायावः'' इति क्रमशः अयादेशे अवादेशे हरय् + इह, विष्णव् + इह इत्यवस्थायां पदान्तयोः अवर्णपूर्वकयोः यवयोः विभाषया लोपः भवति अश्परकत्वात्। इह इत्यत्र इ इति अश्। जाते च तयोः लोपे हर इह, विष्ण इह इति स्थितिः, अत्र ''आद्गुणः'' इति गुणः प्राप्तः अवर्णात् परे अचः स्थितत्वात्। किन्तु गुणः न भवति, किं कारणं न भवति ? अत आह – पूर्वत्रासिद्धमिति।

३१. **पूर्वत्रासिद्धम्** – अष्टाध्याय्याम् अष्टौ अध्यायाः सन्ति। तत्र अष्टमाध्यायस्य प्रथमपादं यावत् सपादसप्ताध्यायी इति उच्यते। अन्तिमं पादत्रयं त्रिपादी इति कथ्यते। सपादसप्ताध्यायीस्थं सूत्रं प्रति त्रिपादीस्थं शास्त्रं = सूत्रम् असिद्धं भवति। अर्थात् त्रिपादीसूत्रेण विहितमपि कार्यं सपादसप्ताध्यायीस्थसूत्रदृष्ट्या अनस्तित्ववद् भवति। त्रिपाद्यामपि पूर्वतनं सूत्रं प्रति परं सूत्रमसिद्धं भवति। अतः अष्टाध्याय्याः अन्तिमं सूत्रं सर्वेषां सूत्राणां दृष्ट्या असिद्धम्। हर इह, विष्ण इह इत्यत्र यकारवकारयोः लोपविधायकस्य ''लोपः शाकल्यस्य'' सूत्रस्य त्रिपादीस्थत्वात् सप्तादसप्ताध्यायीस्थम् ''आद्गुणः''इति सूत्रं प्रति असिद्धत्वात् यलोपे वलोपे जाते अपि गुणः न भवति,'आद्गुणः' इति दृष्ट्या यकारवकारयोः तत्र स्थितत्वात् – (अस्तीति भावनया) अवर्णात् परतःअचः अभावात्। यत्र च पक्षे यकारवकारयोः लोपः न भवति, तस्मिन् पाणिनिपक्षे हरयिह, विष्णविह इति स्थितिः।

**रूपसिद्धिलेखनप्रकारः –**

हरे इह इत्यत्र ''एचोऽयवायाव'' इति सूत्रेण पदान्ते स्थितस्य एकारस्य अयादेशे कृते हरय् + इह इति जाते सति ''लोपः शाकल्यस्य'' इति सूत्रेण अपूर्वकस्य पदान्तस्य यकारस्य विकल्पेन लोपे कृते हर इह इति स्थिते ''आद्गुणः इति सूत्रेण अकार-इकारयोः गुणैकादेशः तु न भवति, 'लोपःशाकल्यस्य' इति सूत्रस्य त्रैपादिकत्वात् तत्कृतस्य य्लोपस्य 'आद्गुणः' इति सपादसप्ताध्यायीस्थसूत्रं प्रति असिद्धत्वात्, अतः हर इह इति रूपम्। यलोपाभावपक्षे तु हरयिह इति रूपं सिद्धम्। एवमेव – विष्णो + इह – विष्णव् + इह – विष्णइह, विष्णविह।

**अन्यानि उदाहरणानि –**

वर्धते+एव = वर्धत एव, वर्धतयेव। लक्ष्म्यै+उद्यतः=लक्ष्म्या उद्यतः, लक्ष्म्यायुद्यतः। गुरौ+आदरः = गुरा आदरः गुरावादरः। विधौ+उदिते = विधा उदिते, विधावुदिते इत्यादीनि।

३२. **वृद्धिरादैच् १/१/१**

आदैच्च वृद्धिसंज्ञः स्यात्।

३३. **वृद्धिरेचि ६/१/८८**

आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम्।

---

३२. वृद्धिसंज्ञासूत्रम् इदम्। आत् ऐच् (आ ऐ औ) इति वर्णानां वृद्धिसंज्ञा भवति। ऐच् इति प्रत्याहारः। अत्र तपरकरणात् 'आ' इति, ऐच् (ऐऔ) इति च समकालस्यैव संज्ञा। अतः दीर्घस्य आकारस्य, वृद्धिसंज्ञा भवति, न तु ह्रस्वप्लुतयोः अकारयोः, न च प्लुतयोः ऐकारौकारयोः इति फलितम्।

३३. **वृद्धिरेचि** – आत् (अवर्णात्) एचि परे पूर्वपरयोः स्थाने वृद्धिरूपः (आ, ऐ औ इत्येतेषु अन्यतमरूपः) एकादेशः भवति। अवर्णात् अचि परे गुणः भवति (आद्गुणः)। एच् अपि अजन्तर्गतः अतः एचि परे अपि गुणः अपि प्राप्नोति, किन्तु वृद्धिः गुणापवादः।

**उदाहरणस्य विश्लेषणम् –**

कृष्ण+एकत्वम् इत्यत्र णकारोत्तरवर्तिनः अकारात् परः एकाररूपः एच् वर्तते, उभयोः स्थाने 'ऐ' इति वृद्धि रूपः एकादेशः भवति, अतः कृष्णैकत्वम् इति रूपम्। एवमेव गङ्गा+ओघः इत्यत्र अकारस्य ओकारस्य च स्थाने 'औ' इति वृद्धिः। देव+ऐश्वर्यम् इत्यत्र अ+ऐ = ऐ आदेशे, देवैश्वर्यम् तथा कृष्ण+औत्कण्ठ्यम् इत्यत्र अ+औ = औ आदेशे 'कृष्णौत्कण्ठ्यम्' इति रूपं निष्पद्यते।

**रूपसिद्धिलेखनप्रकार :**

कृष्णैकत्वम् – कृष्ण+एकत्वम् इत्यत्र 'वृद्धिरादैच्' इति सूत्रेण 'आ ऐ औ' इत्येषां वृद्धिसंज्ञायां कृतायां ''वृद्धिरेचि'' इति सूत्रेण (णकारोत्तरवर्तिनः अकारस्य ततः परस्य एकारस्य च इत्येवम् उभयोः) पूर्वपरयोः स्थाने आन्तरतम्यात् = सदृशतमत्वात् ऐकाररूपे वृद्ध्येकादेशे कृते कृष्ण् + ऐ + कत्वम् इति जाते वर्णसम्मेलने च कृते 'कृष्णैकत्वम्' इति रूपं सिद्धम्।

**कृष्णौत्कण्ठ्यम् –**

कृष्ण+औत्कण्ठ्यम् इत्यत्र वृद्धिसंज्ञायां ''वृद्धिरेचि'' इति सूत्रेण अकार–औकारयोः पूर्वपरयोः स्थाने सादृश्यात् औकाररूपे वृद्ध्येकादेशे कृष्ण्+औ+त्कण्ठ्यम् इत्यवस्थायां वर्णसंयोजने कृते ''कृष्णौत्कण्ठ्यम्'' इति रूपं सिद्धम्।

**अन्यानि उदाहरणानि –**

जन+एकता = जनैकता, धन+एषणा = धनैषणा। शाल्य + ओदनः = शाल्यौ दनः। विप्र + ऐक्यम् = विप्रैक्यम्। मत+ऐक्यम् = मतैक्यम्। धार्मिक + ऐतिहासिकम् = धार्मिकैतिहासिकम्। तव+औदासीन्यम् = तवौदासीन्यम्। अस्य + औत्सर्गिकत्वम् = अस्यौत्सर्गिकत्वम्।

३४.  **एत्येधत्यूठ्सु ६/१/८९**

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। उपैति। उपैधते। प्रष्ठौहः। एजाद्योः किम् ? उपेतः। मा भवान् प्रेदिधत्। (अक्षादूहिन्यामुपसंख्यानम्) अक्षौहिणी सेना।

(प्रादूहोढोढ्येषैष्येषु)। प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः। (ऋते च तृतीयासमासे)। सुखेन ऋतः सुखार्तः। तृतीयेति किम् ? परमर्तः। (प्रवत्सतरकम्बलवसनार्णदशानामृणे)। प्रार्णम्, वत्सतरार्णम् इत्यादि।

---

३४.  **एति+एधति+ऊठ्सु** इतिच्छेदः। एति, एधति इति क्रमशः इण् धातोः एध धातोः शितपा निर्देशः, न तु तिङन्तं रूपम्। तिङन्ते तु एधते इति आत्मनेपदम्। ऊठ् इति सम्प्रसारणरूपम्। अत्र 'वृद्धिरेचि' इति पूर्वसूत्रात् 'एचि' इति, 'आद्गुणः' सूत्रात् 'आत्' इति च अनुवर्तते। एचि इति इणेधोः धात्वोः विशेषणम्। अतः अवर्णात् एजादौ इण्धातौ परे, एजादौ एधधातौ ऊठि च परे पूर्वपरयोः वृद्धिरेकादेशः भवति इति सूत्रार्थः फलितः।

**उदाहरणस्य विश्लेषणम् –**

उप+एति, उप + एधते इत्यत्र अवर्णात् परेः क्रमशः एजादिः इण्धातुः, एजादिः एधधातुश्च वर्तते। अत्र 'एङि पररूपम्' इति प्राप्तं पररूपं प्रबाध्य पूर्वपरयोः अकार-एकारयोः स्थाने आन्तरतम्यात् ऐकाररूपः वृद्ध्येकादेशः भवति। अतः उपैति, उपैधते इति रूपे सिध्यतः। ऊठः उदाहरणं तु प्रष्ठौहः इति। अत्र हि प्रष्ठ+ऊहः इत्यत्र पूर्वपरयोः आन्तरतम्यात् औकाररूपवृद्धिः भवति।

**अत्र प्रश्नः** – इणेधधात्वोः एज् (एजादि) इति विशेषणं किमर्थम् (एजाद्योः किम्) ? उत्तरति-एजादौ इति विशेषणाभावे, यत्र एतौ धातू एजादी न स्तः, तत्रापि वृद्धिः प्राप्नोति। सा च वृद्धिः तत्र न स्यात्, एतदर्थं विशेषणम्। क्व एतौ एजादी न स्तः ? उप+इतः, मा भवान् प्र+इदिधत् इत्यत्र एतौ एजादी न स्तः। अत्र क्रमशः इणः लटि प्रथमपुरुषद्विवचने रूपम्, ण्यन्तस्य एधः लुङि प्र.पु. एकवचने रूपम्। कृते विशेषणे तु उक्त प्रयोगयोः एजादित्वाभावात् वृद्धिः न भवति। अतः गुणैकादेशे उपेतः, प्रेदिधत् इति रूपे स्तः।

**वार्तिकम् –**

**(अक्षादूहिन्यामुपसंख्यानम्)** – अक्षशब्दात् 'ऊहिनी' शब्दे परे वृद्धिः भवति इति वक्तव्यम्। अक्ष+ऊहिनी इत्यवस्थायाम् अकारात् अचि परे 'आद्गुणः' इति गुणस्य प्राप्तिः, स च गुणः न स्यात् अतः विशेषवचनम् एतत्। गुणः किमर्थं न स्यात् ? सति गुणे का हानिः ? अत्र वक्तव्यम् – वाङ्मये तादृशं रूपं न मिलति। यद्रूपं मिलति तत् 'अक्षौहिणी' इति वर्तते। एतदर्थं वृद्ध्यर्थं विशेषवचनरूपं वार्तिकं कृतमिति भावः।

**वार्तिकम –**

प्रादूहोढो. इति। 'प्र' इत्यस्मात् ऊहः, ऊढः, ऊढिः एषः, एष्यः, इत्येतेषु शब्देषु परेषु पूर्वपरयोः वृद्धि : एकादेशः स्यात् इति वक्तव्यम्। प्र+ऊहः, प्र+ऊढः, प्र+ऊढिः इत्यत्र 'आद्गुणः' इति गुणः प्राप्तः, तं बाधि तुं वृद्ध्यर्थं विशेषवचनम्। प्र+एषः, प्र+एष्यः इत्यत्र 'एङिपररूपम्' इति पररूपस्य प्राप्तिः आसीत्, तस्य बाध नाय च एतद्वार्तिकरूपं विशेषवचनम्। अतः उक्त स्थलेषु पूर्वपरयोः वृद्ध्येकादेशे क्रमशः प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः इति रूपाणि सिध्यन्ति।

**वार्तिकम् –**

'ऋते च.' इति। तृतीयातत्पुरुषसमासे अवर्णात् ऋत इति शब्दे परे पूर्वपरयोः वृद्धिः स्यात्। सुखेन ऋतः सुखार्तः इत्युदाहरणम्।'सुख+ऋतः'इत्यत्र प्राप्तं गुणं बाधितुं वार्तिकमेतत्। अस्य अभावे तु गुण एव स्यात्। **अत्र अयं प्रश्नः**–तृतीयासमासे इति किमर्थम् उच्यते ? कथन्न समासे इत्येवम् उच्यते ? उत्तरम्–तृतीया इति कथनस्य अभावे यस्मिन् कस्मिन् अपि समासे अवर्णात् ऋत शब्दे परे सति गुणं प्रबाध्य वृद्धिः एव स्यात्, तादृशीं स्थितिं वारयितुं तृतीयासमासे इत्युक्तम्। परमश्चासौ ऋतश्च इति कर्मधारये परम+ऋतः इत्यत्रापि अवर्णात् ऋतस्य परत्वात् वृद्धिः न भवेत् एतदर्थं तृतीयासमासे इति वचनम्। अत्र च तृतीयासमासत्वाभावात् नास्य वार्तिकस्य प्रवृत्तिः भवति। अतः पूर्वपरयोः गुणैकादेशे रपरत्वे च कृते 'परमर्तः' इति रूपं सिध्यति। तृतीयासमासे तु वृद्धि :, अतः 'सुखार्तः' इति रूपम्।

**३५. उपसर्गाः क्रियायोगे १/४/५९**

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः।

**३६. भूवादयो धातवः १/३/१**

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः।

**३७. उपसर्गादृति धातौ ६/१/९१**

अवर्णान्तादुपसर्गाद् ऋकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। प्रार्च्छति।

---

**वार्तिकम् -**

''प्रवत्सतर.'' इति। प्र, वत्सतर, कम्बल, वसन, ऋण, दश इति एतेभ्यः अकारान्तेभ्यः ऋणशब्दे परे वृद्धिः स्यात् इति वक्तव्यम्। प्र+ऋणम्, वत्सतर+ऋणम् इत्यादौ 'आद्गुणः' इति गुणः प्राप्तः, तं प्रबाध्य अनेन वार्तिकेन पूर्वपरयोः स्थाने आन्तरतम्यात् आकाररूपे वृद्ध्येकादेशे रपरत्वे च विहिते प्रार्णम्, वत्सतरार्णम्, कम्बलार्णम्, वसनार्णम्, ऋण+ऋणम्=ऋणार्णम्, दशार्णम् इति रूपाणि निष्पद्यन्ते।

**अन्यानि उदाहरणानि -**

प्र+एति=प्रैति। प्र+एधाञ्चक्रे=प्रैधाञ्चक्रे। प्र+एधताम्=प्रैधताम्। विश्व+ऊहः = विश्वौहः। प्र + ऐधत = प्रैधत, प्र + एधिषीष्ट = प्रैधिषीष्ट इत्यादीनि।

**३५.** वृद्धिप्रसङ्गे ''उपसर्गादृति धातौ'' इत्यत्र, पररूपप्रसङ्गे च 'एङि पररूपम्' इत्यादौ च धातोः उपसर्गस्य च कार्यविषयत्वात्, तत्र कः उपसर्गसंज्ञकः, कश्च धातुसंज्ञकः इति संभविष्यज्जिज्ञासायामाह - ''उपसर्गाः क्रियायोगे'' इति - अद्रव्यार्थकाः प्रादयः निपाताः क्रियायोगे = क्रियया अन्वये (सम्बन्धे) सति उपसर्गसंज्ञकाः भवन्ति। के प्रादयः ? इति जिज्ञासायामाह - प्र परा इत्यादयः द्वाविंशतिः प्रादयः।

**३६. भूवादयो धातवः** - क्रियावाचिनः भ्वादयः धातुसंज्ञकाः भवन्ति। भूश्च वाश्च इति भूवौ। आदिश्च आदिश्च इति आदी। भूवौ आदी येषां ते भूवादयः। अत्र प्रथमः आदिशब्दः प्रभृतिवाचकः तस्य च भूशब्देन सम्बन्धः।द्वितीयश्च आदिशब्दः प्रकारवाचकः (सादृश्यवाचकः) तस्य च वा शब्देन सह सम्बन्धः। अतः वासदृशाः क्रियावाचकाः भूप्रभृतयः धातुसंज्ञकाः भवन्ति इति सूत्रार्थः फलितः। क्रियावाचकाः धातुसंज्ञका भवन्ति, अतः विकल्पार्थकस्य वा शब्दस्य पृथिवीवाचकस्य भूशब्दस्य च धातुसंज्ञा न भवति, अनयोः क्रियावाचकत्वाभावात्।

**३७.** प्रादिषु उपसर्गेषु ये अकारान्ताः प्र, अप, अव इत्यादयः। तादृशात् अवर्णान्तात् उपसर्गाद् ऋकारादौ धातौ परे पूर्वपरयोः वृद्ध्येकादेशः स्यात् ऋकारादौ धातौ परे सति इति सूत्रार्थः। । तद्यथा 'प्र+ऋच्छति' इत्यत्र 'प्र' इत्यस्य क्रियायोगात् उपसर्गसंज्ञा, ऋच्छति इत्यस्य क्रियावाचकत्वात् धातु संज्ञा अस्ति। अयञ्च उपसर्गः अकारान्तः, धातुश्च यः उपसर्गात्परः स ऋकारादिः वर्तते। अतः अत्र पूर्वपरयोः स्थाने आकाररूपे वृद्ध्येकादेशे रपरत्वे च प्रार्च्छति इति रूपम्।

३८. **एङि पररूपम् ६/१/९४**

आदुपसर्गाद् एङादौ धातौ परे पररूपमेकादेशः स्यात्। प्रेजते। उपोषति।

३९. **अचोऽन्त्यादि टि १/१/६४**

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् (शकन्ध्वादिषु पररूपं वाच्यम्) तच्च टेः। शकन्धुः। कर्कन्धुः। मनीषा। आकृतिगणोऽयम्। मार्तण्डः।

---

**रूपलेखनप्रकारः -**

प्र+ऋच्छति इत्यत्र 'ऋच्छति' इत्यस्य क्रियावाचकत्वात् -भूवादयो धातवः' इति सूत्रेण धातुसंज्ञायां क्रियायोगाच्च ''उपसर्गाः क्रियायोगे' इति सूत्रेण 'प्र' इत्यस्य उपसर्गसंज्ञायाञ्च कृतायाम् ''आद्‌गुण'' इति गुणे प्राप्ते तं प्रबाध्य ''उपसर्गादृति धातौ'' इति सूत्रेण पूर्वपरयोः (उपसर्गस्थ-अकारस्य धातोः आदौ स्थितस्य ऋकारस्य च) स्थाने आकाररूपवृद्ध्येकादेशे 'उरण् रपरः' इत्यनेन रपरत्वे च कृते प्र्+आर्+च्छति इत्यत्र वर्णसम्मेलने च कृते 'प्रार्च्छति' इति रूपं सिद्‌धम्।

**अन्यानि उदाहरणानि** :- उपार्च्छति इत्यादीनि।

३८. अवर्णान्तात् उपसर्गात् एङादौ धातौ परे पूर्वपरयोः स्थाने पररूपमेकादेशः स्यात्। एतादृशे स्थले यद्यपि ''वृद्धिरेचि'' इति सूत्रेण वृद्धेः प्राप्तिः भवति तथापि एङादौ धातौ तु पररूपं भवति, न वृद्धिरिति स्थितिः।

**उदाहरणस्य विश्लेषणम् -**

प्र+एजते, उप+ओषति इत्यत्र क्रमशः प्र, उप इत्येतौ अकारान्तौ उपसर्गौ स्तः, ततः परौ क्रमशः एजते, ओषति इति एङादी धातू स्तः। अत्र एचि परे 'वृद्धिरेचि' इति वृद्धेः प्राप्तिः भवति तथापि अनयोः एङादिधातुत्वात् अनेन विशेषसूत्रेण (अपवादेन) परस्य यद् रूपं, तत् पूर्वपरयोः स्थाने एकादेशत्वेन आदिश्यते। अतः प्रेजते, उपोषति इति रूपं भवति (न तु प्रैजते, उपौषति इति)।

**रूपलेखनप्रकारः -**

प्र+एजते इत्यत्र 'एजते' इत्यस्य क्रियावाचकत्वात् 'भूवादयो धातवः' इत्यनेन धातुसंज्ञायां क्रियायोगात् 'प्र' इत्यस्य ''उपसर्गाः क्रियायोगे'' इत्यनेन उपसर्गसंज्ञायाम् ''वृद्धिरेचि'' इति सूत्रेण वृद्ध्येकादेशे प्राप्ते तम्प्रबाध्य ''एङि पररूपम्' इति सूत्रेण पूर्वपरयोः स्थाने पररूपैकादेशत्वेन एकारे कृते 'प्रेजते' इति रूपं सिद्धम्। एवमेव उपोषति इत्यपि ज्ञेयम्।

**अन्यानि उदाहरणानि-**

प्र+एजाञ्चक्रे = प्रेजाञ्चक्रे। प्र+एजति (कम्पने) = प्रेजति।

प्र+ओणति = प्रोणति, प्रोणाञ्चकार (ओणृ अपनयने) इत्यादीनि।

३९. **अचः अन्त्यादि टि** इतिच्छेदः। 'अचः' इति निर्धारणे षष्ठी, जातौ एकवचनम्। वर्णसमुदाये शब्दे यावन्तः अचः भवन्ति, तेषाम् अचां मध्ये यः अन्तिमः अच्, सः अन्तिमाच् यस्य समुदायस्य आदिः, स समुदायः (अज्झल्समुदायः अज्रूपः वा समुदायः) टिसंज्ञकः भवति। यथा 'मनस्' इति शब्दे अज्द्वयम् अस्ति, तत्र अन्त्यः अच् नकारोत्तरवर्ती अकाररूपः, स च 'अस्' इति समुदायस्य आदिः, अतः 'अस्' इति टिसंज्ञकम्।

**वार्तिकम् -**

'शकन्ध्वादिषु.' इति। 'शकन्धुः' इत्यादिषु (शकन्ध्वादिगणपठितेषु) टेः पररूपं वक्तव्यम् इति वार्तिकाशयः। अत आह - तच्च टेः इति। अर्थात् पूर्वस्य टेः, परस्य च आदिस्वरस्य, इत्येवं पूर्वपरयोः स्थाने पररूपमेकादेशः भवति इति भावः। तद्यथा - शक+अन्धुः कर्क+अन्धुः इत्यत्र शक इत्यत्र ककारोत्तरवर्ती अकारः टिसंज्ञकः, कर्क इत्यत्रापि तथैव, अत्र अकाररूपात् टेः परः अन्धुः इत्यस्य अकार एव, अतः सवर्णदीर्घः प्राप्तः,

४०. **ओमाङोश्च ६।१।९५**

ओमि आङि चात्परे पररूपमेकादेशः स्यात्। शिवायोन्नमः। शिव+एहि।

४१. **अन्तादिवच्च ६।१।८५**

योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्। शिवेहि।

---

तं प्रबाध्य अनेन वार्तिकेन पररूपे शकन्धुः, कर्कन्धुः इति रूपम्। मनस्+ईषा इत्यत्र असः टिसंज्ञकत्वात् ततः परस्य ईकारस्य टेश्च स्थाने पररूपे मनीषा इति रूपम्। अत्र ज्ञेयम्–परस्य यद्रूपं भवति, तस्य एव रूपं पूर्वपरयोः स्थाने भवति, अतः पूर्वस्य रूपम् आत्मानं परस्य रूपे लीनं करोति इति भावः। 'अस्' इति 'ई' इत्यत्र लीनम्, अतः मन् (अस्+ई = ई) षा = मनीषा इति।

**आकृतिगणोऽयम् इति –**

आकृत्याः स्वरूपेण गण्यते परिचीयते इत्याकृतिगणः। अर्थात् एवंविधाः शब्दाः लोके प्रयुक्ताः सन्तः अत्र गणे निवेशनीयाः इति। मृतम् अण्डं यस्य स मृतण्डः। मृत+अण्डः इत्यत्र प्राप्तसवर्णदीर्घं प्रबाध्य अनेन वार्तिकेन पररूपे मृतण्डः इति रूपम्। मृतण्डस्य अपत्यं पुमान् मार्तण्डः। मृतण्ड शब्दस्य अत्र निवेशः आकृतिगणत्वात् बोध्यः।

**रूपलेखनप्रकारः –**

कर्कन्धुः – कर्क+अन्धुः इत्यत्र ककारोत्तरवर्तिनः अकारस्य ''अचोऽन्त्यादि टि'' इति सूत्रेण टिसंज्ञायां (स्वस्यैव आदित्वात्) कृतायाम् ––''अकः सवर्णे दीर्घः'' इति सूत्रेण पूर्वपरयोः सवर्णदीर्घे एकादेशेप्राप्ते तं प्रबाध्य टेः 'अन्धु+' इत्यकारस्य स्थाने पररूपे एकादेशे शकन्धुः इति रूपं सिद्धम्। मनस्+ईषा इत्यत्र तु 'अस्' इति टेः ईषा इत्यत्रस्थ'ई'इत्यस्यच स्थाने पररूपे मनीषा इति रूपम्।

**अन्यानि उदाहरणानि –**

कुल + अटा = कुलटा। सीम + अन्तः = सीमन्त। सार + अङ्ग = सारङ्गः। हल + ईषा = हलीषा। लाङ्गल + ईषा = लाङ्गलीषा। पतत् + अञ्जलिः = पतञ्जलिः इत्यादीनि।

४०. अत्र 'आद्गुणः' इत्यतः आत् इति, 'एङि पररूपम्' इत्यतश्च पररूपम् इति अनुवर्तते। अतः अवर्णात् ओमि आङि च परे पूर्वपरयोः पररूपमेकादेशः स्यादिति सूत्रार्थः। अवर्णात् ओमि परे 'वृद्धिरेचि' इति वृद्धेः प्राप्तिः भवति, सूत्रमेतत् तां वृद्धिं बाधते पररूपञ्च विधत्ते।

**रूपलेखनप्रकारः –**

शिवाय+ओम् नमः इत्यत्र वृद्धिसंज्ञायां ''वृद्धिरेचि'' इति सूत्रेण पूर्वपरयोः अकार–ओकारयोः स्थाने वृद्ध्येकादेशे प्राप्ते तं प्रबाध्य ''ओमाङोश्च'' इति सूत्रेण पररूपे ओकारादेशे कृते शिवायोम् नमः इति स्थिते ''मोऽनुस्वारः'' इति सूत्रेण मस्य अनुस्वारे शिवायों नमः इति जाते ''अनुस्वारस्य ययि परसवर्णः'' इति सूत्रेण अनुस्वारस्य परसवर्णे नकारे कृते शिवायोन्नमः इति रूपं सिद्धम्।

**शंका** – शिव+आ+इहि इत्यत्र ''शिव+आ'' इति अकार–आकरयोः 'अकः सवर्णे दीर्घः'' इति सूत्रेण सवर्णदीर्घे प्राप्ते ''आ+इहि'' इत्यत्र च ''आद्गुणः'' इति सूत्रेण आकार–इकारयोः स्थाने गुणैकादेशे च प्राप्ते द्वयोः कतरत् कार्यं प्रथमं विधेयमिति जिज्ञासायां ''धातूपसर्गयोः कार्यमन्तरङ्गम्'' इति परिभाषया अत्र गुणस्य धातूपसर्गसम्बन्धि कार्यत्वात् अन्तरङ्गत्वात् प्रथमं गुणे कृते शिव+एहि इत्यत्र वृद्धिः प्राप्ता – अत्र वृद्धिं प्रबाध्य पररूपं यथा स्यात् तथा कर्तुम् उपक्रमते – अन्तादिवच्च – इति

४१. **अन्तादिवत् च।** यः पूर्वपरयोः स्थाने एकादेशः क्रियते, स पूर्वस्य अन्तवत् भवति, परस्य च आदिवत् भवति। यतो हि एकादेशः द्वयोः स्थानिनोः पूर्वपरयोः स्थाने भवति, तत्र एकादेशे पूर्वस्य अन्तिमः भागः, परस्य

४२. **अकः सवर्णे दीर्घः ६/१/१०१**

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। दैत्यारिः। श्रीशः। विष्णूदयः। होतॄकारः।

---

च आदिभागः मिलित्वा तिष्ठतः। तत्र च एकादेशे सति आवश्कत्वे पूर्वस्य अन्तवद्भावमादाय कार्यं कर्तुं शक्यते, परस्य च आदिवद्भावमादाय अपि कार्यं कर्तुं शक्यम्। यथा शर्कराचूर्णयोः मिश्रणेन निर्मिते मोदके शर्करात्वभावः चूर्णत्वभावश्च भवतः तथैव अत्रापि बोध्यम्। प्रकृतप्रसङ्गे शिव+एहि इत्यत्र 'ए' इति एकादेशः 'आ+इ' इति द्वयोः स्थाने जातः। तत्र च एकादेशे पूर्वभागः 'आ' इति परभागश्च 'इ' इति। सति आवश्यकत्वे एकारे पूर्वस्य 'आ' इत्यस्य अन्तवद्भावः आनेतुं शक्यः ईकारस्य आदिवत्त्वमपि। अत्र पूर्वस्य अन्तवद्भावमादाय आङ्त्वम् आनेतव्यम्। तथा सति शिवाय इति अकारात् परः आङ् उपलभ्यते अतः 'ओमाङोश्च' इति सूत्रेण पररूपे कृते 'शिवेहि' इति रूपम्। इत्थम् अन्तवद्भावेन वृद्धेः बाधः सञ्जातः।

**रूपलेखनप्रकारः -**

शिवेहि :- शिव+आ+इहि इत्यवस्थायां 'शिव+आ' इत्यत्र ''अकः सवर्णे दीर्घः'' इति सूत्रेण सवर्णदीर्घे एकादेशे प्राप्ते ''आ+इहि'' इत्यत्र च ''आद्गुणः'' इति गुणे प्राप्ते ''धातूपसर्गयोः कार्यमन्तरङ्गम्'' इति परिभाषया अत्र प्रयोगे गुणस्य धातूपसर्गसम्बन्धित्वात् अन्तरङ्गत्वात् प्रथमं तस्मिन् जाते शिव+एहि इति जाते 'वृद्धिरेचि' इति सूत्रेण पूर्वपरयोः वृद्ध्येकादेशे प्राप्ते, तां च वृद्धिं प्रबाध्य ''अन्तादिवच्च'' इति सूत्रेण एहि इत्यत्र एकाररूपैकादेशे पूर्वान्तवद्भावेन आङ्त्वमादाय 'ओमाङोश्च'' इति सूत्रेण पररूपे कृते 'शिवेहि' इति रूपं सिद्धम्।

४२. अक् इति प्रत्याहारः। अ इ उ ऋ लृ इति तत्र वर्णाः। एभ्यः वर्णेभ्यः सवर्णेषु स्वरेषु अर्थात् अ इ उ ऋ लृ इत्येतेषु एव परेषु पूर्वपरयोः स्थाने सवर्णः दीर्घः एकादेशः भवति। अकारात् अकारे परे, इकारात् इकारे, उकारात् उकारे, ऋकारात् ऋकारे, लृकारात् लृकारे च परे, इति यावत्। एते अत्र सवर्णान् ग्राहयन्ति अविधीयमानत्वात्। अतः ऋकारलृकारयोः सावर्ण्यात् ऋकारात् लृकारे परेऽपि सवर्णदीर्घः ॠकारः भवति, दीर्घलृकारस्तु न, तस्य दीर्घत्वाभावात्।

**उदाहरणस्य विश्लेषणम् -**

दैत्य + अरिः, श्री + ईशः, विष्णु + उदयः इत्यत्र अकार-ईकार-उकारेभ्यः अग्रे तत्तत्सवर्णिनः एव स्वराः सन्ति, अतः पूर्वपरयोः सवर्णदीर्घ एकादेशः अत्र भवति, दैत्यारिः, श्रीशः, विष्णूदयः, इति। होतृ+लृकारः इत्यत्र ऋकारात्परः सवर्णी लृकारः विद्यते, लृकारस्तु दीर्घो भवत्येव नहि, अतः सवर्णदीर्घत्वेन ॠकार एव भवति होतकारः इति।

**रूपलेखनप्रकार :-**

दैत्यारिः = दैत्य+अरिः इत्यत्र ''अकः सवर्णे दीर्घः'' इति सूत्रेण पूर्वपरयोः स्थाने आकाररूपसवर्णदीर्घे एकादेशे कृते 'दैत्यारिः' इति रूपं सिद्धम्।

**अन्यानि उदाहरणानि :-**

क्रमशः विद्या+आलयः = विद्यालयः, देव+आलयः = देवालयः, कपि+ईशः = कपीशः, रवि+इन्द्रः = रवीन्द्रः, भानु+उदयः = भानूदयः, पितृ+ऋकारः = पितकारः इत्यादीनि।

**४३. एङः पदान्तादति ६/१/१०९**

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णोऽव।

**४४. सर्वत्र विभाषा गोः ६/१/११२**

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते। गो अग्रम्, गोऽग्रम् एङन्तस्य किम् ? चित्रग्वग्रम्। पदान्ते किम् ? गोः।

---

४३. **एङः पदान्तात् अति** इतिच्छेदः। 'अति' इति कृततपरस्य अकारस्य सप्तम्येकवचनम्। तपरत्वात् समकालस्यैव ग्रहणात् अत् इत्यस्य ह्रस्वः अकारः इत्यर्थः। पदान्तात् एङः अर्थात् पदान्ते स्थितात् एङः (एओ) ह्रस्वे अकारे परे पूर्वरूपमेकादेशः भवति, न तु अयादेशः अवादेशश्च।

**उदाहरणस्य विश्लेषणम् -**

हरे+अव, विष्णो+अव इत्यत्र 'हरे' 'विष्णो' इति सम्बोधनान्तपदद्वयम् एङन्तमस्ति, अस्माच्च पदान्तादेङः अव इति ह्रस्वः अकारः परः विद्यते। अत्र प्राप्तम् 'एचोऽयवायावः' इति सूत्रं प्रबाध्य पूर्वपरयोः पूर्वरूपमेकादेशः अनेन विधीयते, अतः हरेऽव, विष्णोऽव इति स्थितिः।

**रूपलेखनप्रकारः -**

हरे+अव इत्यत्र 'एचोऽयवायावः'' इति सूत्रेण अचि परे एकारस्य अयादेशे प्राप्ते तं प्रबाध्य ''एङः पदान्तादति'' इति सूत्रेण पूर्वपरयोः 'ए-अ' इत्यनयोः स्थाने पूर्वरूपैकादेशे कृते हरेऽव इति रूपं सिद्धम्।

**अन्यानि उदारहणानि -**

रामो+अस्मि = रामोऽस्मि। शिवो + अर्च्यः = शिवोऽर्च्यः। ग्रामे + अस्मिन् = ग्रामेऽस्मिन्। कृते + अपि = कृतेऽपि इत्यादीनि।

४४. पदान्ते विद्यमानस्य एङन्तस्य गोशब्दस्य ह्रस्वे अकारे परे (अति परे) विकल्पेन प्रकृतिभावः भवति अर्थात् न किमपि सन्धिकार्यं विकाररूपं भवति। यथा प्रकृतिः तथैव तिष्ठति इत्यर्थः। अर्थात् 'एङः पदान्तादति' इत्यस्य अपवादरूपम् इदम्। सर्वत्र अर्थात् लौकिके संस्कृते वैदिके च।

**उदाहरणविश्लेषणम् :-**

गो + अग्रम् इत्यत्र अवादेशं प्रबाध्य ''एङःपदान्तादति'' इति सूत्रेण पूर्वरूपस्य प्राप्तिः, गोशब्दस्य एङन्तत्वात्। अनेन सूत्रेण एङन्तस्य गोशब्दस्य विषये अति परे विकल्पेन विशेषकार्यं प्रकृतिभावात्मकं क्रियते। अतः गो अग्रम् इति रूपम्। यत्र पक्षे प्रकृतिभावः न विहितः तत्र पूर्वरूपमेकादेशः अतः 'गोऽग्रम्' इति द्वितीयं रूपम्।

**अत्र प्रश्नः -**

एङन्तस्य किम्? अर्थात् गोशब्दस्य स्वभावतः एङन्तत्वात् सिद्धे कार्ये किमर्थम् 'एङन्तस्य' इति गोशब्दविशेषणम् ? उत्तरम् - न हि सर्वत्र गोशब्दः एङन्तः। यथा चित्रा गावः अस्य चित्रगुः इति बहुव्रीहिसमासे उकारान्तत्वं प्राप्नोति गोशब्दः। 'एङन्तस्य' इति विशेषणाभावे तु चित्रगु+अग्रम् इत्यत्रापि प्रकृतिभावस्य प्राप्तिः संभवा, गोशब्दत्वात्। सा च न भवेत् एतदर्थम् 'एङन्तस्य' इति विशेषणं कृतम्। सति विशेषणे तु चित्रगुः इत्यस्य एङन्तत्वाभावात् प्रकृतिभावस्य प्राप्तिरेव न भवति। अतः यणि जाते चित्रग्वग्रम् इति रूपं निष्पन्नं भवति।

**अपरः प्रश्नः -**

पदान्ते इति किम् ? अर्थात् पदान्ते एङन्तस्य गोशब्दस्य इति किमर्थमुच्यते ? उत्तरम् - 'पदान्ते' इति यदि न कथ्येत तर्हि अपदान्तेऽपि एङन्तस्य गोशब्दस्य अति परे प्रकृतिभावापत्तिः स्यात्। यथा-गोशब्दस्य पञ्चम्येकवचने ङसि विभक्तौ गो+अस् इत्यत्रापि अपदान्ते विद्यमानस्य एङन्तस्य गोशब्दस्य हृस्वेऽकारे परे पूर्वरूपमेव प्रबाध्य प्रकृतिभावः भवेत्। 'पदान्ते' इति कथिते तु अस्य अपदान्तत्वात् नास्य सूत्रस्यात्र प्रवृत्तिः, अतः

४५. **अनेकाल्शित्सर्वस्य १/१/५५**
इति प्राप्ते।

४६. **ङिच्च १/१/५६**
ङिदनेकालप्यन्त्यस्यैव स्यात्।

४७. **अवङ् स्फोटायनस्य ६/१/१२३**
पदान्ते एङन्तस्य गोरवङ् वाऽचि। गवाग्रम्, गोऽग्रम्। पदान्ते किम्? गवि।

---

पूर्वरूपे गो: इति निष्पन्नम्।

**रूपलेखनप्रकार :-**

**गोअग्रम्, गोऽग्रम्** – गो+अग्रम् इत्यत्र 'एचोऽयवायाव:' इत्यनेन अवादेशे प्राप्ते, तं प्रबाध्य ''एङ: पदान्तादति'' इति सूत्रेण पूर्वरूपे प्राप्ते, तदपि प्रबाध्य ''सर्वत्र विभाषा गो:'' इति सूत्रेण विकल्पेन प्रकृतिभावे कृते गो अग्रम् इति रूपम्। प्रकृतिभावाभावपक्षे तु पूर्वरूपैकादेशे 'गोऽग्रम्' इति रूपं निष्पन्नम्।

४५. **अनेकाल्.** इति। अग्रे ''अवङ् स्फोटायनस्य'' इति सूत्रेण पदान्ते एङन्तस्य गोशब्दस्य अचि परे अवङोदेश: विधास्यते। स च अवङादेश: किं सम्पूर्णस्य गोशब्दस्य स्यात् 'अन्त्यस्य वा ? इति प्रश्नं समाधातुं समाधानपरकं किमप्याह – अनेकाल् – इति. अनेक: अल् यस्य स अनेकाल्, शकरावयव: इत् यस्य स शित्। अनेकाल् आदेश:, शिच्च आदेश: यस्य कथित: तस्य सर्वस्य = सम्पूर्णस्य स्थाने भवति। एतद् 'अलोऽन्त्यस्य' इत्यस्य अपवादभूतम् इति फलितम्।

४६. **ङिच्च** – ङकारावयव: इत् यस्य स ङित्। अनेकाल् सन् अपि य आदेश: ङित् (यत्र ङ्वर्णस्य इत्संज्ञा) स आदेश: अन्त्यस्य अल: एव स्थाने स्यात्, न तु अनेकाल्त्वात् सम्पूर्णस्य इति भाव:। एतच्च 'अनेकाल्शित्सर्वस्य' इत्यस्यापवाद:।

४७. स्फोटायन: कश्चित् पाणिने: प्राग्वर्ती वैयाकरणविशेष:। तन्मतानुसारं पदान्ते एङन्तस्य गो: अचि परे विकल्पेन अवङादेश: भवति। 'अवङ्' इत्यत्र 'अव' इति अकारान्तम् अवशिष्यते, ङकारश्च इत्संज्ञक:। अत: अयमादेश: ङिद् अस्ति। अनेकाल् अप्ययं वर्तते। 'अलोऽन्त्यस्य' इत्यनुसारम् अस्य षष्ठीनिर्दिष्टत्वात् (गो: इत्येवम्) गोशब्दावयवस्य अन्त्यस्य अल: ओकारस्य स्थाने स्यात्, किन्तु तदपवादसूत्रम् ''अनेकाल्शित्सर्वस्य'' इति व्यवस्थापयति यदसौ आदेश: अनेकाल् अस्ति, अनेकाल्त्वात् सर्वस्य = सम्पूर्णस्य गोशब्दस्य स्थाने स्यात्। तस्यापि अपवादसूत्रं 'ङिच्च' इति। एतदनुसारम् अनेकाल् सन्नपि –'अवङ्' आदेश: ङित्त्वात् अन्त्यस्य अल: ओकारस्य एव स्यादिति व्यवस्था। अत: गो+अग्रम् इत्यत्र पदान्ते विद्यमानस्य गोशब्दस्य ओकारस्य स्थाने स्फोटायनमते अवङादेशे ग्+अव+अग्रम् इति जाते ''अक: सवर्णे दीर्घ:'' इति सवर्णदीर्घे वर्णसम्मेलने कृते 'गवाग्रम्' इति रूपम्। अवङ: अभावपक्षे ''सर्वत्र विभाषा गो:'' इति सूत्रेण विकल्पेन प्रकृतिभावे 'गो अग्रम्' इति द्वितीयं रूपम्। प्रकृतिभावाभावे ''एङ: पदान्तादति'' इति सूत्रेण पूर्वरूपैकादेशे 'गोऽग्रम्' इति तृतीयं रूपम्।

**अन्यानि उदाहरणानि –**

(१) गवार्चनम्, गोऽर्चनम्, गो अर्चनम्।
(२) गवावयव:, गोऽवयव:, गो अवयव:।
(३) गो+अक्ष: = गवाक्ष: इत्यत्र विकल्प: नास्ति।

**४८. इन्द्रे च ६/१/१२४**

गोरवङ् स्यादिन्द्रे। गवेन्द्रः।

**४९. दूराद्धूते च ८/२/८४**

दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा।

**५०. प्लुतप्रगृह्या अचि नित्यम्। ६/१/१२५**

एतेऽचि प्रकृत्या स्युः। आगच्छ कृष्ण३ अत्र गौश्चरति।

**५१. ईदूदेद्द्विवचनं प्रगृह्यम् १/१/११**

ईदूदेदन्तं द्विवचनं प्रगह्यं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू।

---

४८. इन्द्रे शब्दे परे पदान्ते गोशब्दस्य अवङ्आदेशः भवति। 'अवङ् स्फोटायनस्य'' इति विकल्पस्य निवृत्त्यर्थं पुनः 'इन्द्रे च' इति सूत्रस्य आरम्भः।

**उदाहरणस्य विश्लेषणम् –**

गो+इन्द्रः इत्यत्र 'एचोऽयवायावः' इत्यस्य प्राप्तिः आसीत्, तम् अयादेशं प्रबाध्य ''अवङ्स्फोटायनस्य'' इति विकल्पेन 'अवङ्' आदेशे प्राप्ते तमपि प्रबाध्य ''इन्द्रे च'' इति सूत्रेण नित्य अवङ्आदेशे ग्+अव+इन्द्रः इत्यवस्थायां ''आद्गुणः'' इति गुणैकादेशे गवेन्द्रः इति सिद्धम्।

४९. **दूराद्धूते च** – दूरात् हूते च इतिच्छेदः। दूरात् हूते = सम्बोधने यद् वाक्यं तस्य टेः विकल्पेन प्लुतत्वं भवति। तस्य किं फलम् ? इति चेत् – ''प्लुतप्रगृह्या.'' इति वक्ष्यते।

५०. **'प्लुतप्रगृह्या.' इति।** प्लुताः च प्रगृह्याःच प्लुतप्रगृह्याः। ते अचि (स्वरे) परे प्रकृत्या = स्वभावतः यथा सन्ति तथैव तिष्ठन्ति अर्थात् तत्र सन्ध्यादिकार्यं विकारात्मकं न भवति। प्लुतसंज्ञा, प्रगृह्यसंज्ञा च येषां भवति, ते प्लुताः प्रगृह्याश्च।

**उदाहरणस्य विश्लेषणम् –**

'आगच्छ कृष्ण३ अत्र गौश्चरति' इति वाक्ये 'आगच्छ कृष्ण' इति सम्बोधनवाक्यस्य टेः णकारोत्तरवर्तिन अकारस्य प्लुतसंज्ञा 'दूराद्धूते च' इति सूत्रेण जाता, ततः परः अत्र इति शब्दस्य अच् अकारः स्थितः, 'कृष्ण३ + अत्र' इत्यत्र सवर्णदीर्घस्य प्राप्तिः, किन्तु 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावकरणात् न सवर्णदीर्घः।

**रूपलेखनप्रकारः –**

'आगच्छ कृष्ण३ अत्र गौश्चरति' इत्यत्र सम्बोधने 'आगच्छ कृष्ण' इति वाक्ये ''दूराद्धूते च'' इति सूत्रेण वाक्यस्य टेः (णकारोत्तरस्य अकारस्य) प्लुतसंज्ञायां कृतायां कृष्ण ३ + अत्र इत्यत्र ''अकः सवर्णे दीर्घः'' इति सवर्णदीर्घैकादेशे प्राप्ते तं प्रबाध्य ''प्लुतप्रगृह्या अचि नित्यम्'' इति सूत्रेण प्लुतसंज्ञकस्य प्रकृतिभावे कृते 'आगच्छ कृष्ण३ अत्र॰' इति सिद्धम्।

**अन्यानि उदाहरणानि –**

आगच्छ प्रभो३ अस्मान् पाहि। शृणु राम३ आश्रमं गच्छाम इत्यादीनि।

५१. ईदन्तम् (ईकारान्तम्) ऊदन्तम् (ऊकारान्तम्) एदन्तम् (एकारान्तम्) यद् द्विवचनं भवति, तस्य प्रगृह्यसंज्ञा स्यात्। द्विवचानन्तम् एव अत्र द्विवचनं ज्ञेयम्।

**उदाहरणविश्लेषणम् –**

हरी+एतौ, विष्णू+इमौ, गङ्गे+अमू इत्यादिषु हरी इति ईकारान्तं द्विवचनान्तं पदम्, विष्णू इति ऊकारान्तं पदम्, गङ्गे इति एकारान्तं द्विवचनान्तं पदम्। एषाम् प्रगृह्यसंज्ञा भवति। तस्याः फलं तु –''प्लुतप्रगृह्या अचि नित्यम्'' इति प्रकृतिभावः। तेन हरी+एतौ विष्णू+इमौ इत्यत्र यण् न भवति, गङ्गे अमू इत्यत्र अयादेशश्च न भवति। ('हरी' इत्यादौ द्विवचनान्तस्य द्विवचनत्वम् 'अन्तादिवच्च' सूत्रेण परादिवद्भावात् बोध्यम्)

५२. **अदसो मात् १/१/१२**

अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात् किम् ? अमुकेऽत्र।

५३. **चादयोऽसत्त्वे १/४/५७**

अद्रव्यार्थाश्चादयो निपाताः स्युः।

५४. **प्रादयः १२४/५८,**

एतेऽपि तथा।

---

**रूपलेखनप्रकारः –**

हरी+एतौ इत्यत्र ''इको यणचि'' इति सूत्रेण ईकारस्य यण् प्राप्तः, किन्तु ''ईदूदेद्द्विवचनं प्रगृह्यम् ''इति सूत्रेण 'हरी' इति ईकारान्तद्विवचनस्य (द्विवचनान्तस्य) प्रगृह्यसंज्ञायां कृतायां ''प्लुतप्रगृह्या अचि नित्यम्'' इति सूत्रेण प्रकृतिभावे कृते (अतः स्वरसन्धिः यण् न) हरी एतौ इति प्रयोगः साधुः। गङ्गे अमू इत्यत्र अयादेशः प्राप्तः प्रगृह्यत्वात् प्रकृतिभावे स न भवति।

**अन्यानि उदाहरणानि –**

चक्षुषी एते, गुरू आगच्छतः, नेत्रे इमे, प्रतिष्ठेते एतौ इत्यादीनि।

५२. अदस्शब्दसम्बन्धी यः मकारः, तस्मात् परौ ईदूतौ (ईकार – ऊकारौ) प्रगृह्यसंज्ञकौ भवतः। अत्र ईत्, ऊत् इति पूर्वसूत्रात् अनुवर्तेते, एत् इति तु न अनुवर्तते।

**उदाहरणविश्लेषणम् –**

अमी इति अदसः पुँल्लिङ्गे प्रथमाबहुवचने, अमू इति द्विवचने रूपम्। अत्र मकारात् परः ईकारः, ऊकारश्च प्रगृह्यसंज्ञकः। ततश्च प्रकृतिभावः भवति। अतः अमी+ईशाः इत्यत्र सवर्णदीर्घैकादेशः, अमू+आसाते इत्यत्र यण् च न भवति।
**प्रश्नः** – मात् इति ग्रहणं किमर्थम् ? उत्तरम् – 'अमुकेऽत्र' इति। यदि 'मात्' इति ग्रहणं न क्रियेत तदा तु पूर्वसूत्रात् एकारस्यापि अनुवृतिः भवेत्, ततश्च अमुके+अत्र इत्यत्र ककारात् परस्य अदस्शब्दसम्बन्धिनः एकारस्यापि प्रगृह्यसंज्ञा स्यात्, तेन पूर्वरूपं न भवेत्। कृते तु माद्ग्रहणे ततः परस्य एकारस्य असंभवात् अनुवृत्तिः न भवति।

**रूपलेखनप्रकारः –**

अमी+ईशाः इत्यत्र ''अकः सवर्णे दीर्घः'' इत्यनेन सवर्णदीर्घैकादेशे प्राप्ते तं प्रबाध्य ''अदसो मात्'' इत्यनेन सूत्रेण अदस्सम्बन्धिमकारात्परस्य ईकारस्य प्रगृह्यसंज्ञायां कृतायां ''प्लुतप्रगृह्या अचि नित्यम्'' इति सूत्रेण प्रकृतिभावे कृते अमी ईशाः इति रूपं निष्पन्नम्। एवमेव 'अमू आसाते' इत्यत्र ऊकारस्य प्रगृह्यसंज्ञकत्वात् प्रकृतिभावः। अतः तत्र अचि परेऽपि यण् न भवति।

५३. **चादयः असत्त्वे** इतिच्छेदः। न सत्त्वम् असत्त्वम्। सत्त्वं = द्रव्यम् (यत्र लिङ्गस्य संख्यायाः कारकस्य च प्रतीतिः भवेत् तद् द्रव्यम्) असत्त्वम् = अद्रव्यम् तस्मिन् असत्त्वे। अर्थात् अद्रव्यार्थे विद्यमानाः च, वा इत्यादयः निपातसंज्ञकाः भवन्ति। द्रव्यम् अर्थः येषां न भवति, ते अद्रव्यार्थाः इति भावः।

५४. अद्रव्यार्थाः प्रादय अपि निपातसंज्ञकाः भवन्ति। प्रादयः द्वाविंशतिसंख्याकाः ''उपसर्गाः क्रियायोगे'' इति सूत्रे उल्लिखिताः। अतः तत्र द्रष्टव्याः।

**५५. निपात एकाजनाङ् १/१/१४**

एकोऽज् निपात आङ्वर्जः प्रगह्यः स्यात्। इ इन्द्रः। उ उमेशः। 'वाक्यस्मरणयोरङित्' । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र ङित्, आ ईषद् उष्णम् ओष्णम्।

**५६. ओत् १/१/१५**

ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः।

---

५५. एकश्चासौ अच् इति एकाच् इति कर्मधारयः, न तु एकः अच् अस्मिन् इति बहुव्रीहिः। न आङ् इति अनाङ् = आङ्भिन्नः। आङ्भिन्न एकाज् निपातः

प्रगृह्यसंज्ञकः भवति। आङ्वर्जः = आङ्भिन्नः आङं वर्जयित्वा इत्यर्थः। आङ् इति निपातस्य प्रगृह्यसंज्ञा न भवति इति फलितार्थः।

**उदाहरणस्य विश्लेषणम् -**

'इ' इति विस्मयार्थकः एकाज् निपातः। 'उ' इति वितर्के अर्थे विद्यमान एकाज् निपातः। एतौ आङ्भिन्नौ स्तः। अतः अनयोः प्रगृह्यसंज्ञा भवति। प्रगृह्यत्वात् प्रकृतिभावः भवति, अतः 'इ इन्द्रः' 'उ उमेशः' इत्यत्र सवर्णदीर्घैकादेशः न भवति।

**रूपलेखनप्रकारः -**

'इ इन्द्रः' इत्यत्र 'अकः सवर्णे दीर्घः' इति सूत्रेण सवर्णदीर्घे एकादेशे प्राप्ते 'इ' इत्यस्य निपातस्य एकाच्त्वात् आङ्भिन्नत्वात् च ''निपात एकाजनाङ्'' इति सूत्रेण प्रगृह्यसंज्ञायां कृतायां ''प्लुतप्रगृह्या अचि नित्यम्'' इति सूत्रेण प्रकृतिभावे इ इन्द्रः इति सिद्धम्। एवमेव 'उ उमेशः' इत्यपि ज्ञेयम्।

**विशेषः -**

आङ्, आ च इति द्वौ भिन्नौ निपातौ स्तः। उभयत्रापि 'आ' इत्येव शिष्यते। तत्र आङः प्रगृह्यसंज्ञा न भवति, ङकाररहितस्य (अङितः) तु भवति। तत्र प्रयोगेषु कुत्र 'आङ्' इत्यस्य ङकारानुबन्धकस्य आ भवति, कुत्र च शुद्धस्य 'आ' इति निपातस्य आ इति, सन्देहः भवति, तं सन्देहं निराकर्तुम् उच्यते - 'वाक्यस्मरणयोरङित्' इति भाष्यवचनम्। अर्थात् वाक्ये स्मरणे च ङिद्भिन्नः भवति। अतः तस्य तु प्रगृह्यसंज्ञा भवति, प्रकृतिभावश्चापि भवति। अन्येषु अर्थेषु यथा - ईषदर्थे, क्रियायोगे, मर्यादार्थे अभिविधौ च प्रयुक्तः 'आ' तु ङिदेव। अतः तस्य प्रगृह्यसंज्ञा न भवति ततः प्रकृतिभावः अपि न। यथा आ उष्णम् = ओष्णम् इत्यत्र प्रगृह्यत्वस्य प्रकृतिभावस्य च अभावात् गुणः भवति। अत्र 'आ' इति ईषदर्थे ङिदस्ति। ''आ एवं नु मन्यसे'' ''आ एवं किल तत्'' इत्यत्र क्रमशः वाक्ये स्मरणे च प्रयुक्तः 'आ' इति निपातः अङिदस्ति। अतः प्रगृह्यत्वात् प्रकृतिभावे सति आ + एवम् इत्यत्र वृद्धिः न भवति इति विवेकः।

५६. ओकारान्तः निपातः प्रगृह्यसंज्ञकः भवति। अहो, अथो इत्यादीनाम् निपातानाम् अनेकाच्त्वात् पूर्वेण अप्राप्ता प्रगृह्यसंज्ञा अनेन क्रियते।

**उदाहरणस्य विश्लेषणम् -**

'अहो' इति ओकारान्तः निपातः। अस्य च प्रगृह्यसंज्ञा भवति, तस्मात् प्रकृतिभावः। अतः अहो ईशाः इत्यत्र अवादेशः न भवति। यदि प्रगृह्यसंज्ञा न अभविष्यत् तदा तु अवादेशः एवाभविष्यत्।

**रूपलेखनप्रकारः -**

अहो + ईशाः इत्यत्र ''एचोऽयवायावः'' इति सूत्रेण अचि परे ओकारस्य अवादेशः प्राप्तः किन्तु 'अहो' इत्यस्य ओकारान्त - निपातत्वात् ''ओत्'' इति सूत्रेण प्रगृह्यसंज्ञायां कृतायां ''प्लुतप्रगृह्या अचि नित्यम्'' इति सूत्रेण प्रकृतिभावे कृते अहो+ईशाः इति रूपं निष्पन्नम्।

५७. **सम्बुद्धौ शाकल्यस्येतावनार्षे १/१/१६**

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे। विष्णो इति, विष्ण इति, विष्णविति।

५८. **मय उञो वो वा ८/३/३३**

मयः परस्य उञो वो वा अचि। किम्वुक्तम्, किमु उक्तम्।

---

**अन्यानि उदाहरणानि -**

अथो+अपि = अथो अपि इति। अत्र अथो इति मङ्गलार्थकः ओदन्तः निपातः। मिथो+एतौ = मिथो एतौ इति। अत्र मिथो इति सहार्थे ओदन्तः निपातः।

**अत्रावधेयम् -**

अथो अथ इति द्वौ भिन्नौ निपातौ समानार्थकौ स्तः। मिथो मिथस् एतौ अपि तथैव समार्थकौ द्वौ निपातौ स्तः।

सम्बुद्धिनिमित्तकः ओकारः णकारोत्तरवर्ती अस्ति, तस्य ओकारस्य प्रगृह्यसंज्ञा भवति, यतो हि ततः परः इतिशब्दः विद्यते। न चायम् इतिशब्दः वेदसम्बन्धी। इत्थं शाकल्यमते प्रगृह्यत्वात् प्रकृतिभावे 'विष्णो इति' एतत् प्रथमं रूपम्। पाणिनिमते तु अवादेशेः विष्णव्+इति इत्यवस्थायां ''लोपः शाकल्यस्य'' इति वैकल्पिके वलोपे 'विष्ण इति' इति द्वितीयं रूपम्। वस्य लोपाभावे तु विष्णविति इति रूपं तृतीयम्।

**रूपलेखनप्रकारः -**

विष्णो इति, विष्ण इति, विष्णविति - विष्णो + इति इत्यत्र 'एचोऽयवायावः' इति सूत्रेण अवादेशे प्राप्ते ''सुम्बुद्धौ शाकल्यस्येतावनार्षे'' इति सूत्रेण णकारोत्तरवर्तिन ओकारस्य सम्बुद्धिनिमित्तकत्वात् विकल्पेन प्रगृह्यसंज्ञायां कृतायां, ''प्लुतप्रगृह्या अचि नित्यम्'' इति सूत्रेण प्रकृतिभावे विष्णो इति प्रथमं रूपम्। प्रगृह्यत्वाभावपक्षे अवादेशे विष्णव्+इति इत्यवस्थायां ''लोपः शाकल्यस्य'' इति सूत्रेण विकल्पेन वकारस्य लोपे विष्ण इति इति द्वितीयं रूपम्। (अत्र गुणस्तु न, वलोपस्य त्रैपादिकत्वात् गुणविधायकं प्रति असिद्धत्वात्)। वलोपाभावपक्षे तु विष्णविति इति तृतीयं रूपं सिद्धम्।

**अन्यानि उदाहरणानि -**

भानो इति, भान इति, भानविति। शम्भो इति, शम्भ इति, शम्भविति। गुरो इति, गुर इति, गुरविति। मनो इति, मन इति, मनविति इत्यादीनि।

**५७.** सम्बुद्धौ शाकल्यस्य + इतौ + अनार्षे इतिच्छेदः। ऋषिशब्दः वेदार्थकः अपि। ऋषिसम्बन्धी आर्षः अर्थात् वैदिकः। वेदसम्बन्धी इत्यर्थः। न आर्षः अनार्षः अर्थात् अवैदिकः। य वेदसम्बन्धी न भवति स इति भावः। 'इतौ' इतिशब्दस्य सप्तम्येकवचने रूपम्। परसप्तमी इयम्। सम्बुद्धिः सम्बोधने प्रथमैकवचनम्। सम्बुद्धिः निमित्तमस्य, सम्बुद्धिनिमित्तकः। तादृशः य ओकारः स विकल्पेन प्रगृह्यसंज्ञकः भवति, अवैदिके इतिशब्दे परे।

**उदाहरणस्य विश्लेषणम् -**

'विष्णो इति' इत्यत्र 'विष्णो' इति सम्बोधने एकवचनस्य रूपम्। अत्र

**५८.** मय् इति प्रत्याहारः, तत्र म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प इति वर्णाः। मयः परस्य उञ् (उ) इति एकाचः निपातस्य विकल्पेन व् इत्यादेशः भवति अचि परे सति। 'निपात एकाजनाङ्' इति प्रगृह्यत्वात् प्रकृतिभावे प्राप्ते, यणः अप्राप्तौ इदं वचनम्।

**रूपलेखनप्रकारः -**

किम् उ उक्तम् इत्यत्र ''इको यणचि'' इत्यनेन उकारस्य यणि प्राप्ते तत्प्रबाध्य ''निपात एकाजनाङ्'' इति सूत्रेण 'उ' इति निपातस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभावे च प्राप्ते ''मय उञो वो वा'' इत्यनेन सूत्रेण 'उ' इत्यस्य विकल्पेन 'व्' आदेशे किम्वुक्तम् इति रूपम्। वादेशाभावे प्रकृतिभावे किमु उक्तम् इति रूपं द्वितीयम्।

**५९. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६/१/१२७**

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि। ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः। चक्रि अत्र, चक्र्यत्र। पदान्ता इति किम् ? गौर्यौ।

**६०. अचो रहाभ्यां द्वे ८/४/४६**

अच पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। गौर्य्यौ। (न समासे)। वाप्यश्वः।

---

**५९** पदान्ताः इ उ ऋ लृ इति वर्णाः (इकः) असवर्णे अचि परे शाकल्यस्य मते विकल्पने ह्रस्वाः भवन्ति। एते वर्णाः सवर्णान् ग्राहयन्ति, अविधीयमानत्वात्।

**उदाहरणस्य विश्लेषणम् –**

'चक्री+अत्र' इत्यत्र 'चक्री' इति पदम्। अत्र पदान्तः वर्णः 'ई' विद्यते, स च इगन्तर्गतः। तस्माच्च ईकारात्परः 'अत्र' इत्यस्य घटकः अकारः, स च अकारः ईकारस्य असवर्णः अच् वर्तते। अतः अत्र पदान्तात् इकः परः असवर्णः अच् विद्यते इति कृत्वा ईकारस्य ह्रस्वत्वं भवति चक्रि+अत्र इति जातम्। कृते ह्रस्वे यण् तु न भवति, ह्रस्वविधिसमर्थ्यात्। कृते यणि तु ह्रस्वत्वकरणमेव व्यर्थं स्यात् इति भावः। पाणिनिमते तु ह्रस्वत्वं न भवति, तत्र पक्षे यणेव स्यात् अतः चक्र्यत्र इति द्वितीयं रूपं भवति।

**रूपलेखनप्रकारः –**

चक्री+अत्र इत्यत्र ''इको यणचि'' इति सूत्रेण ईकारस्य स्थाने यण्त्वेन यकारे प्राप्ते ''इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च'' इति सूत्रेण विकल्पेन पदान्तस्य ईकारस्य ह्रस्वत्वे कृते चक्रि अत्र इति प्रथमं रूपम्। ह्रस्वत्वाभावपक्षे यणि कृते 'चक्र्यत्र' इति द्वितीयं रूपं सिद्धम्। कृते ह्रस्वे ह्रस्वत्वविधि सामर्थ्यात् यण् न भवति, तथा सति ह्रस्वत्वस्य वैयर्थ्यापत्तेः।

**प्रश्नः –**

अत्र पदान्ताः इकः इति किमर्थमुक्तम् ? इति प्रश्ने – गौर्यौ इति उत्तरम्। अर्थात् यदि पदान्ताः इति विशेषणं नोच्येत तर्हि अपदान्तस्यापि इकः ह्रस्वत्वापत्तिः आपतेत्। तथा सति गौरी + औ इत्यत्र अपदान्तस्य ईकारस्य ह्रस्वत्वे सति तद्विधिसामर्थ्यात् यणेव न स्यात् ततश्च गौर्यौ इति रूपं न सिद्ध्येत् इति भावः।

**अन्यानि उदाहणानि –**

दण्डी + आह = दण्डि आह, दण्ड्याह। ज्ञानी + आगतः = ज्ञानि आगतः, ज्ञान्यागतः। बली + ऋक्षः = बलि ऋक्षः, बल्यृक्षः। तेजस्वी + आगच्छति = तेजस्वि आगच्छति, तेजस्व्यागच्छति। धनी + ऐच्छत् = धनि + ऐच्छत्, धन्यैच्छत् इत्यादीनि।

**६०.** अत्र 'यर्' इति 'वा' इति च पदद्वयं ''यरोऽनुनासिकेऽनुनासिको वा'' इति सूत्रात् अनुवर्तते। अचः इति पञ्चम्येकवचनं, 'रहाभ्याम्' इति पञ्चमीद्विवचनान्तम्। अतः अचः परौ यौ रेफहकारौ स्तः, ताभ्यां रेफहकाराभ्यां (रेफात् हकारात् इति प्रत्येकस्मात्) परः यर् ( य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स इत्येते वर्णाः अर्थात् हकारं परित्यज्य सर्वे व्यञ्जनवर्णाः) द्वित्वं प्राप्नोति विकल्पेन।

**उदाहरणस्य विश्लेषणम् –**

गौरी+औ इत्यत्र ''इको यणचि'' इति सूत्रेण ईकारस्य यण्त्वेन यकारे कृते गौर् + य् + औ इत्यवस्थायाम् गकारोत्तरवर्तिन औकारात् परः रेफः, तस्माच्च रेफात् परः यर् यकारः अस्ति, तस्य विकल्पेन द्वित्वं भवति अतः गौर् य् य् औ = 'गौर्य्यौ' इति रूपम्। यत्र द्वित्वं न भवति, तस्मिन् पक्षे एकयकाररूपं गौर्यौ इति रूपम्।

६१. **ऋत्यकः ६/१/१२८**

ऋति परे पदान्ता अकः प्राग्वद् वा। ब्रह्म ऋषिः, ब्रह्मर्षिः। पदान्ताः किम्? आर्च्छत्।

*इत्यच्सन्धिः*

---

**रूपलेखनप्रकारः -**

**गौर्य्यौ, गौर्यौ** - गौरी + औ इत्यत्र ''इको यणचि'' इति सूत्रेण ईकारस्य स्थाने यण्त्वेन यकारे कृते गौर्य् औ इत्यवस्थायाम् ''अचो रहाभ्यां द्वे'' इति सूत्रेण अचः परस्मात् रेफात् परस्य यकारस्य (यरः) विकल्पेन द्वित्वे गौर् य् य् औ वर्णसम्मेलने गौर्य्यौ इति प्रथमं रूपम्। द्वित्वाभावे गौर्यौ इति द्वितीयं रूपं निष्पन्नम्।

**वार्तिकम् -**

(न समासे) ''इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च'' इति सूत्रेण पदान्तस्य इकः यत् ह्रस्वत्वं भवति, तत् समासे स्थितस्य इकः न भवति। यथा वाप्यश्वः इति रूपम्। वाप्याम् अश्वः = वाप्यश्वः इति सप्तमीतत्पुरुषः। अत्र समासे ईकारान्तं 'वापी' इति पदं ह्रस्वं न भवति, अतः यणि सति एकमेव रूपम्। समासेऽपि सति ह्रस्वे तु रूपद्वयं स्यात्।

**अन्यानि उदाहरणानि -**

द्वित्वस्य - शर्म्मा, शर्मा। कर्त्ता, कर्ता इत्यादीनि। (न समासे) इत्यस्य तु - सूच्यग्रम्, भवान्यात्मजः, वध्वागतम् इत्यादीनि।

६१. **ऋति** + **अकः** इतिच्छेदः। पदान्ताः अकः ऋति (ह्रस्वे ऋकारे) परे विकल्पेन ह्रस्वाः भवन्ति। अत्र अकः इति अविधीयमानत्वात् सवर्णान् ग्राहयन्ति इति ज्ञेयम् अन्यथा तु वर्णसमाम्नाये दीर्घाणाम् अभावात् ह्रस्वत्वविधानमेव व्यर्थं स्यात्।

**उदाहरणस्य विश्लेषणम् -**

ब्रह्मा + ऋषिः इत्यत्र 'ब्रह्मा' इत्यत्र पदान्तः 'आ' इति अक् अस्ति। अस्माच्च परः 'ऋषि' इत्यस्य ऋकारः। तस्मिन् ऋकारे (ह्रस्व-ऋकारे) परे पदान्तस्य अकः = आकारस्य विकल्पेन ह्रस्वत्वं विधीयते। यत्र ह्रस्वविधिः जातः, तत्पक्षे स्वरसन्धिः (गुणः) न भवति।

**रूपलेखनप्रकारः -**

ब्रह्मा + ऋषिः इत्यत्र ''आद्गुणः'' इति सूत्रेण पूर्वपरयोः गुणैकादेशे प्राप्ते ''ऋत्यकः'' इति सूत्रेण पदान्तस्य = आकारस्य विकल्पेन ह्रस्वत्वे ब्रह्म ऋषिः इति रूपम्। सति च ह्रस्वे तत्र न गुणः, ह्रस्वविधि सामर्थ्यात्। ह्रस्वत्वाभावपक्षे ब्रह्मा+ऋषिः इत्यत्र आन्तरतम्यात् अकाररूपे गुणैकादेशे ''उरण् रपरः'' इति सूत्रेण रपरत्वे च कृते ब्रह्म् + अर् + षिः इत्यवस्थायां वर्णसम्मेलने जलतुम्बिकान्यायेन रेफस्य ऊर्ध्वगमने ''ब्रह्मर्षिः'' इति द्वितीयं रूपम्।

**प्रश्न :-**

अत्र पदान्ताः अकः इति किमर्थम् उक्तम् ? उत्तरम् - यदि पदान्ताः इति नोच्यते तर्हि अजादेः धातोः विधीयमानस्य आडागमस्य अपि 'आ + ऋच्छत्' इत्यत्र ह्रस्वत्वं स्यादिति भावः। तथा सति 'आर्च्छत्' इति रूपं न स्यात्।

**अन्यानि उदाहरणानि -**

**पूषा+ऋच्छति :-** पूष ऋच्छति, पूषर्च्छति इत्यादीनि।

**इति अच्सन्धिः समाप्तः।**

## अभ्यासार्थं प्रश्नाः

**वस्तुनिष्ठप्रश्नाः –**

१. इकः स्थाने यण् भवति :

(क) अणि परे (ख) अचि परे
(ग) अलि परे (घ) हलि परे ( )

२. षष्ठीनिर्दिष्टः आदेशः ..............अलःस्थाने भवति –

(क) आदेः (ख) मध्यस्थस्य
(ग) अन्त्यस्य (घ) सर्वस्य ( )

३. कपये (कपे + ए) इति उदाहरणम् अस्ति –

(क) यण्सन्धेः (ख) सवर्णदीर्घसन्धेः
(ग) अयादिसन्धेः (घ) पूर्वरूपसन्धेः ( )

४. गङ्गौघः इत्यत्र सन्धिरस्ति –

(क) गुणः (ख) वृद्धिः
(ग) पररूपम् (घ) अयादिः ( )

५. उपदेशे .................... अचः इत्संज्ञा भवति –

(क) अन्त्यस्य (ख) अनुनासिकस्य
(ग) आदेः (घ) अननुनासिकस्य ( )

६. 'आ ऐ औ' इति वर्णानां संज्ञा भवति –

(क) गुणः (ख) वृद्धिः
(ग) ऊष्मसंज्ञा (घ) टि ( )

७. प्रादयः उपसर्गसंज्ञकाः भवन्ति –

(क) धातुयोगे (ख) क्रियायोगे
(ग) प्रत्यययोगे (घ) पदयोगे ( )

८. असत्त्वे चादयः भवन्ति –

(क) निपातसंज्ञकाः (ख) गतिसंज्ञकाः
(ग) उपसर्गसंज्ञकाः (घ) कर्मप्रवचनीयसंज्ञकाः ( )

**लघूत्तरात्मकाः प्रश्नाः –**

९. 'इको यणचि' इति सूत्रार्थं विलिख्य उदाहरणानि लेख्यानि।
१०. 'तपरस्तत्कालस्य' इति सूत्रार्थं स्पष्टयत।
११. वृद्धिसंज्ञाविधायकं सूत्रं विलिख्य 'वृद्धिरेचि' इति सूत्रं सोदाहरणं वर्णयत।
१२. पररूपसन्धिः कुत्र भवति ? इति विलिख्य 'प्रेजते' इति रूपं साधयत।
१३. कियन्तः उपसर्गाः ? तेषां नामानि लिखत।
१४. सवर्णदीर्घैकादेशः कस्याम् अवस्थायां सम्भवति।
१५. मध्वरिः, कृष्णर्द्धिः, प्रष्ठौहः, विष्णोऽव, इ इन्द्रः, चक्रि अत्र, ब्रह्मर्षिः एषु चत्वारः प्रयोगाः साध्याः।

## अथ हल्सन्धिः

**६२. स्तोः श्चुना श्चुः ८/४/४०**

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। रामश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जयः।

**६३. शात् ८/४/४४**

शात् परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः।

**६४. ष्टुना ष्टुः ८/४/४१**

स्तोः ष्टुना ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।

---

**६२.** स् च तुश्च स्तुः, तस्य स्तोः। श् च चुश्च श्चुः, तेन श्चुना। श्चुः। अर्थात् सकारतवर्गयोः शकारेण चवर्गेण च योगे सति सस्य स्थाने शकारः, तवर्गस्य च यथासङ्ख्यं चवर्गः भवति।

**उदाहरणस्य विश्लेषणम् -**

रामस् + शेते इत्यत्र सस्य शकारेण योगः अस्ति, अतः सस्य स्थाने 'श' आदेशः जातः। अतः रामश्शेते इति रूपम्। एवमेव रामस् + चिनोति अत्र सस्य चवर्गयोगः। सत् + चित् इत्यत्र तवर्गस्य चवर्गयोगः। शार्ङ्गिन् + जय इत्यत्रापि चवर्गयोगः। अतः सस्य शकारः, तवर्गस्य च चवर्गादेशः भवति।

**रूपलेखनप्रकारः -**

रामस् + शेते इत्यत्र ''स्तोः श्चुना श्चुः'' इति सूत्रेण शकारयोगे सस्य शकारादेशे कृते रामश्शेते इति सिद्धम्।

**अन्यानि उदाहरणानि -**

हरिस् शेते = हरिश्शेते। कस् + चित् = कश्चित्। सत् + चरित्रम् = सच्चरित्रम्। विपत् + जालम् = विपज्जालम् इत्यादीनि।

६३. चुत्वस्य प्रतिषेधकं सूत्रम् एतत्। शकारात् परस्य तवर्गस्य शकारयोगे सत्यपि चुत्वं न भवति इत्याशयः।

**उदाहरणस्य विश्लेषणम् -**

विश् + नः, प्रश् + नः इत्यत्र नकारः तवर्गस्य वर्णः। स च शकारात् परः विद्यते। अत्र तवर्गस्य शकारेण योगः अस्ति, अतः 'स्तोः श्चुना श्चुः' इति सूत्रेण चुत्वं प्राप्तं भवति। 'शात्' इति सूत्रेण चुत्वस्य निषेधः क्रियते, अतः विश्नः, प्रश्नः इत्येव रूपे भवतः।

**रूपलेखनप्रकारः -**

विश् + नः, इत्यत्र ''स्तोः श्चुना श्चुः'' इति सूत्रेण शकारयोगे नस्य चुत्वेन ञकारे प्राप्ते ''शात्'' इति सूत्रेण निषेधे कृते विश्नः इति रूपं सिद्धम्।

**६४.** ष् च टुश्च ष्टुः। सकारतवर्गयोः षकारेण टवर्गेण च योगे सति सस्य षः, तवर्गस्य च स्थाने टवर्गः प्रयुज्यते इति भावः।

**उदाहरणस्य विश्लेषणम् -**

रामस् + षष्ठः इत्यत्र सस्य षकारेण योगः (सम्बन्धः) अस्ति, अतः सस्य 'ष' आदेशः भवति। एवमेव रामस् + टीकते इत्यत्र सस्य टकारेण योगः, पेष् + ता इत्यत्र तवर्गस्य षकारेण योगः, तत् + टीका इत्यत्र तवर्गस्य टवर्गीयेण योगः, चक्रिन् + ढौकसे इत्यत्रापि तथैव। अतः सर्वत्र तवर्गस्य टवर्गरूपे सस्य च षकाररूपे परिवर्तनं जातम्।

**६५. न पदान्ताट्टोरनाम् ८/४/४२**

पदान्ताट्टवर्गात् परस्याऽनामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते पदान्तात् किम् ? ईट्टे। टोः किम् ? सर्पिष्टमम्। (अनाम्नवतिनगरीणामिति वाच्यम्) षण्णाम्। षण्णवतिः। षण्णगर्यः।

**६६. तोःषि ८/४/४३**

न ष्टुत्वम्। सन्षष्ठः।

---

**रूपलेखनप्रकारः -**

रामस् + षष्ठः इत्यत्र ''ष्टुना ष्टुः इति सूत्रेण षकारयोगे सस्य षकारादेशे कृते ''रामष्षष्ठः'' इति रूपं सिद्धम्।

**अन्यानि उदाहरणानि -**

त्रयस् + षट्पदाः = त्रयष्षट्पदाः। मत् + टीका = मट्टीका। पदार्थास् + टङ्किताः = पदार्थाष्टङ्किताः।

**६५. न पदान्तात् टोः अनाम्** इतिच्छेदः। पदान्तात् टवर्गात् परस्य सस्य तवर्गस्य च ष्टुत्वं न भवति, किन्तु 'नाम्' इत्यस्य तु नस्य टवर्गणकारः भवति। **वार्तिकम्** - नाम्भिन्नस्य, नवतिभिन्नस्य, नगरीभिन्नस्य च ष्टुत्वं न भवति इति वक्तव्यम् अर्थात् पदान्तात् टवर्गात् परस्य नाम्, नवति, नगरी इति पदत्रयस्य तवर्गनकारस्य तु ष्टुत्वं भवति, अन्यस्य ष्टुत्व निषेधः इति वार्तिकाशयः।

**उदाहरणस्य विश्लेषणम् -**

षट् + सन्तः इत्यत्र पदान्तात् टवर्गात् परस्य सस्य 'ष्टुना ष्टुः' इति प्राप्तस्य षादेशस्य अनेन निषेध : क्रियते। षट् + ते इत्यत्र तवर्गस्य प्राप्तः टवर्गादेशः अनेन निषिध्यते, पदान्तटवर्गात् परत्वात्। षड्नाम्, षड्नवतिः, षड्नगर्यः इत्यत्र तु वार्तिकानुसारं नस्य टवर्गणकारः विधीयते डस्य अनुनासिके च षण्णाम्, षण्णवतिः, षण्णगर्यः इति रूपाणि भवन्ति।

**रूपलेखनप्रकारः -**

**षट् सन्तः** षड् + सन्तः इत्यत्र ''ष्टुना ष्टुः'' इति सूत्रेण सस्य षत्वे प्राप्ते'' न पदान्ताट्टोरनाम्'' इति सूत्रेण निषेधे कृते ''खरि च'' इति सूत्रेण डस्य चर्त्वेन टकारे कृते 'षट्सन्तः'' इति रूपं सिद्धम्। एवमेव षट्ते इत्यत्र टुत्वनिषेधः।

**षण्णाम् -**

षड् + नाम् इत्यत्र ''न पदान्तात्.'' इति ष्टुत्वस्य निषेधे प्राप्ते ''अनाम्नवति'' इत्यादिवार्तिकेन प्रतिषेधे ष्टुत्वे च कृते षड्+णाम् इत्यवस्थायां ''प्रत्यये भाषायां नित्यम्'' इति वार्तिकेन डकारस्य अनुनासिके च कृते 'षण्णाम्' इति रूपम्। ईट्टे इत्यत्र ईड् + ते इत्यवस्थायां टवर्गस्य (डकारस्य) पदान्तत्वाभावात् न ष्टुत्वस्य निषेधः, अतः ष्टुत्वे ईड् + टे इति जाते डस्य चर्त्वेन (खरि च) टकारे ईट्टे इति रूपम्। सर्पिष् + तमम् इत्यत्र तु ष्टुत्वं भवति। सूत्रे यदि पदान्तात् ष्टोः इति अकथयिष्यत् तदा तु ष्टुत्वस्य निषेधः अभविष्यत्।

**अन्यानि उदाहरणनि -**

षट् + तरवः = षट् तरवः। द्विड् + धावति = द्विड्धावति इत्यादीनि।

**६६.** तु इत्यस्य पञ्चम्येकवचनं तोः इति। षि इति ष् इत्यस्य सप्तम्ये - कवचनम्। अतः तवर्गात् षकारे परे तवर्गस्य टवर्गः न भवति इति सूत्रार्थः।

**उदाहरणस्य विश्लेषणम् -**

सन् + षष्ठः इत्यत्र तवर्गस्य नकारः, तस्मात् परः 'षष्ठः' इति षकारः। अत्र षकारयोगे तवर्गस्य ''ष्टुना ष्टुः'' इति टवर्गे प्राप्ते, अनेन निषिध्यते। अतः सन्षष्ठः इत्येवं रूपम्।

६७. **झलां जशोऽन्ते ८/२/३९**

पदान्ते झलां जश: स्यु:। वागीश:।

६८. **यरोऽनुनासिकेऽनुनासिको वा ८/४/४५**

यर: पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारि: एतद्मुरारि:।

---

**रूपलेखनप्रकार: –**

सन् + षष्ठ: इत्यत्र ''ष्टुना ष्टु:'' इति सूत्रेण षकारयोगे तवर्गनकारस्य टवर्गे (टुत्वे) प्राप्ते ''तो: षि'' इति सूत्रेण तन्निषेधे कृते 'सन्षष्ठ:' इति सिद्धम्।

**अन्यानि उदाहरणानि –**

मयूरात् षण्मुखोऽवतरति। पुष्पात् षट्पद उत्पतति इत्यादीनि।

६७. **झलाम् जश: अन्ते** इतिच्छेद:। पदान्ते विद्यमानानां झलां स्थाने जश: = वर्गाणां तृतीयवर्णा: जबगडदा: यथायोग्यं स्यु:।

**उदाहरणस्य विश्लेषणम् –**

वाक् + ईश: इत्यत्र पदान्ते विद्यमान: झल् ककार:, तस्य च स्थाने कवर्गतृतीय: गकार: भवति, अत: वागीश: इति रूपम्। एवमेव जगदीश: इत्याद्यपि ज्ञेयम्।

**रूपलेखनप्रकार :–**

वाक्+ईश: इत्यत्र ''झलां जशोऽन्ते'' इति सूत्रेण पदान्ते विद्यमानस्य ककारस्य जश्त्वेन गकारे कृते वाग् + ईश: इत्यवस्थायां वर्णसम्मेलने कृते वागीश: इति रूपं सिद्धम्।

**अन्यानि उदाहरणानि –**

जगत्+ईश: जगदीश:। दिक्+अम्बर: = दिगम्बर:। षट् + आम्रफलानि = षडाम्रफलानि। चित् + आनन्द: = चिदानन्द:। चित् + रूपम् = चिद्रूपम् इत्यादीनि।

६८. **यर: अनुनासिके अनुनासिक: वा** इतिच्छेद:। पदान्ते विद्यमान: य: यर् प्रत्याहारवर्ण:, तस्मात् वर्णात् परे अनुनासिके वर्णे सति तस्य यर्प्रत्याहारवर्णस्य विकल्पेन अनुनासिकवर्ण: भवति इत्याशय:।

**उदाहरणस्य विश्लेषणम् –**

यथा एतद् + मुरारि: इत्यत्र पदान्ते विद्यमान: यर्प्रत्याहारवर्ण: दकार: अस्ति। तस्मात् पर: मकार: अनुनासिकवर्ण: विद्यते। अत: दकारस्य (यर:) स्थाने विकल्पेन तद्वर्गीय एव अनुनासिक: नकार: जात:। अनुनासिकाभावे दकार एव तिष्ठति। इत्थम् एतन्मुरारि: एतद्मुरारि: इति रूपद्वयम्।

**रूपलेखनप्रकार: –**

एतद् + मुरारि: इत्यत्र ''यरोऽनुनासिकेऽनुनासिको वा'' इति सूत्रेण दकारस्य विकल्पेन अनुनासिके नकारे कृते एतन्मुरारि: इति रूपं सिद्धम्। अनुनासिकाभावे एतद्मुरारि: इत्यपि द्वितीयं रूपम्। (प्रत्यये भाषायां नित्यम्) तन्मात्रम्। चिन्मयम्।

**अन्यानि उदाहरणानि –**

त्वग् + मनसी = त्वङ्मनसी, त्वग्मनसी। धिग् + मूर्खम् = धिङ्मूर्खम्, धिग्मूर्खम्। मद् + नीति: = मन्नीति: मद्नीति। जगद् + नाथ: = जगन्नाथ:, जगद्नाथ: इत्यादीनि।

**वार्तिकम् –**

अनुनासिकादिप्रत्यये परे पदान्तस्य यर: स्थाने नित्यम् अनुनासिकवर्ण: भवति।

**६९. तोर्लि: ८/४/६०**

तवर्गस्य लकारे परे परसवर्ण:। तल्लय:। विद्वाँल्लिखति। नस्यानुनासिको ल:।

**७०. उद: स्थास्तम्भो: पूर्वस्य ८/४/६१**

उद: परयो: स्थास्तम्भो: पूर्वसवर्ण:।।

**७१. तस्मादित्युत्तरस्य १/१/६७**

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम्।

---

**उदाहरणस्य विश्लेषणम् –**

तद् + मात्रम् इत्यत्र पदान्तस्य दकारस्य (यर:) मात्रच् प्रत्यये परे सूत्रेण विकल्पेन अनुनासिके प्राप्ते अनेन वार्तिकेन नित्यम् अनुनासिकत्वं विधीयते, अत: तन्मात्रम् इति एकमेव रूपम्। एवमेव चिन्मयम् इत्यत्रापि ज्ञेयम्।

**रूपलेखनप्रकार: –**

तत् + मात्रम् इत्यत्र ''यरोऽनुनासिकेऽनुनासिको वा'' इति सूत्रेण तस्य विकल्पेन अनुनासिके प्राप्ते ''प्रत्यये भाषायां नित्यम्'' इति वार्तिकेन नित्यम् अनुनासिके कृते तन्मात्रम् इति सिद्धम्।

**अन्यानि उदाहरणानि –**

वाग् + मय: = वाङ्मय:। वाग् + मात्रम् = वाङ्मात्रम्। षड् + णाम् = षण्णाम् इत्यादीनि।

**६९.** तो: लि इतिच्छेद:। तवर्गात् लकारे परे तवर्गवर्णस्य परसवर्ण: स्यात्। यथा – तद् + लय: इत्यत्र तवर्गस्य वर्ण: दकार: विद्यते, तस्मात् पर: लय: इति लकार: विद्यमान:। अत: पूर्वस्य दस्य परसवर्ण: लकार: एव भवति। एवमेव विद्वान् + लिखति इत्यत्र तवर्गस्य नकार:, तस्मात्पर: लिखति इति लवर्ण: विद्यते। अत: अनेन सूत्रेण नकारस्य स्थाने परसवर्णत्वेन अनुनासिकलकार: विधीयते। यतो हि पूर्वम् उक्तं यत् यवला: अनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा भवन्ति। अत: अनुनासिकस्य नकारस्य स्थाने क्रियमाण: परसवर्ण: लकार: अपि अनुनासिक: एव भवति 'विद्वाँल्लिखति' इति। 'तल्लय:' इत्यत्र तु दकार:, स च न अनुनासिक:। अत: तस्य स्थाने परसवर्ण: लकार अपि अननुनासिक एव भवतीति विज्ञेयम्।

**रूपलेखनप्रकार: –**

तद् + लय: इत्यत्र ''तोर्लि'' इति सूत्रेण दस्य परसवर्णत्वेन लकारे कृते 'तल्लय:' इति सिद्धम्।

**अन्यानि उदाहरणानि –**

तद् + लीन: = तल्लीन:। जगद् + लीयते = जगल्लीयते। भगवद् + लीला = भगवल्लीला। हसन् + लिखति = हसँल्लिखति। धीमान् + लिखति = धीमाँल्लिखति इत्यादीनि।

**७०.** उद् इति उपसर्ग:, तस्मात् परस्य स्थाधातो:, स्तम्भधातो: च पूर्वसवर्ण: स्यात्। यथा उद् + स्थानम्, उद् + स्तम्भनम् इत्यत्र उदुपसर्गात् परौ स्थास्तम्भौ धातू स्त:। अत: अनयो: धात्वो: पूर्वसवर्ण: भवति।

**प्रश्न: –**

उद् इति उपसर्गात् परस्य इत्युक्ते: किं व्यवहितपरस्य अपि कार्यं कर्तुं शक्यते वा ? अव्यवहितपरस्य वा ? इति प्रश्ने वक्ष्यते 'तस्मादित्युत्तरस्य' इति परिभाषां सूत्ररूपाम्।

**७१. तस्मात् इति उत्तरस्य** इतिच्छेद:। परिभाषासूत्रम् इदम्। पञ्चमीनिर्देशद्वारा यत् कार्यं विधीयते, तत्कार्यं पञ्चमीनिर्देशेन प्रयोगे बोधितात् अव्यवहितपरस्य = व्यवधानशून्यस्य परस्य बोध्यम् इति व्यवस्था। प्रकृतप्रसंगे ''उद: स्थास्तम्भो:'' इति सूत्रे 'उद:' इत्येवं पञ्चमीनिर्देश:। एतेन प्रयोगे उद् + स्थानम्, उद् + स्तम्भनम् इत्यत्र

७२.    **आदेः परस्य १/१/५४**

परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। इति सस्य थः।

७३.    **झरो झरि सवर्णे ८/४/६५**

हलः परस्य झरो वा लोपः स्यात् सवर्णे झरि।

७४.    **खरि च ८/४/५५**

---

उद् इत्यस्य ग्रहणं भवति। अतः अस्मात् उदः अव्यवहितपरस्य = साक्षात् उत्तरस्य एतेन क्रियमाणं परसवर्णरूपं कार्यं कर्तव्यम्। उदः अव्यवहितपरम् उक्तधातुद्वयम् अस्ति, अतः तस्यैव तत्।

**प्रश्न :**

उदः अव्यवहितपरस्य स्थाधातोः, स्तम्भधातोश्च किं सम्पूर्णस्य स्थाने पूर्वसवर्णः कार्यः ? कस्यचिद् अंशविशेषस्य वा ? इति जिज्ञासायाम् अवतारयति व्यवस्थापकं परिभाषासूत्रम् – ''आदेः परस्य'' इति –

७२.    परस्य = उत्तरस्य यत् कार्यं विहितं, तत्कार्यं तस्य आदेः वर्णस्य बोध्यम् इति व्यवस्था। अतः उद् + स्थानम् इत्यत्र उदः अव्यवहितपरस्य स्थाधातोः आदिवर्णस्य सकारस्य, उद् + स्तम्भनम् इत्यत्र स्तम्भधातोः आदिवर्णस्य सकारस्य स्थाने पूर्वसवर्णः वर्णः कर्तव्यः। पूर्वः दकारः तस्य सवर्णिनः तवर्गस्य सर्वे वर्णाः 'तथदधनाः' सन्ति। एतेषु सकारस्य स्थाने कतमः विधेयः ? इति प्रश्ने – 'स्थानेऽन्तरतमः' इति निर्देशानुसारं सस्य सदृशतमः विवारश्वासाघोषमहाप्राणः थकारः एव पूर्वसवर्णः भवति, नान्यः।

**उदाहरणस्य विश्लेषणम् –**

उद् + स्थानम् इत्यत्र ''तस्मादित्युत्तरस्य'' ''आदेः परस्य'' इति सूत्रद्वयसहकारेण ''उदः स्थास्तम्भोः पूर्वस्य'' इति सूत्रेण उदः अव्यवहितस्य परस्य स्थाधातोः आदेः वर्णस्य सकारस्य स्थाने सदृशतमे पूर्वसवर्णत्वेन थकारे कृते उद् + थ् थानम् इति स्थिते, उद् + स्तम्भनम् इत्यत्र च उद् + थ् तम्भनम् इति स्थिते ..................... ।

७३.    हलः परस्य झर्प्रत्याहारगतवर्णस्य विकल्पेन लोपः भवति सवर्णे झरि परे सति इति सूत्राशयः।

**उदाहरणस्य विश्लेषणम् –**

उद् + थ् थानम्, उद् + थ् तम्भनम् इत्यत्र दकारात् (हलः) परस्य थकारस्य (झरः) लोपः भवति, यतो हि तस्मात् परः तस्य सवर्णः झर् क्रमशः उक्तयोः प्रयोगयोः थकारः, तकारश्च विद्यते। इत्थम् उद्+थानम् इति, उद्+तम्भनम् इति स्थितिः जाता ..................................।

७४.    खरि = खर्प्रत्याहारान्तर्गताः ये वर्णाः तेषु परेषु, झलां स्थाने चरः = 'च ट त क प श ष स' इत्येते स्युः।

**उदाहरणस्य विश्लेषणम् –**

उद् + थानम्, उद् + तम्भनम् इत्यत्र उभयत्र दकारः झल्वर्णः, तस्मात् परौ क्रमशः थकारतकारौ स्तः, तौ च खर्प्रत्याहारगतौ विद्येते। अतः खर्परत्वात् झलः =दस्य चर्त्वेन तकारः सञ्जातः इत्येवम् उत् + थानम्, उत् + खरि झलां चरः स्युः। इत्युदो दस्य तः। उत्थानम्। उत्तम्भनम्।

**७५. झयो होऽन्यतरस्याम् ८/४/६२**

झय: परस्य हस्य वा पूर्वसवर्ण:। नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थ:। वाग्घरि:, वाग्हरि:।

**७६. शश्छोऽटि ८/४/६३**

झय: परस्य शस्य छो वाऽटि। तद्+शिव: इत्यत्र दस्य श्चुत्वेन जकारे कृते 'खरि च' इति जकारस्य चकार:। तच्छिव:, तच्शिव:। (छत्वममीति वाच्यम्) तच्छ्लोकेन।

---

तम्भनम् इति स्थिति: जाता:, ततश्च वर्णसम्मेलने उत्थानम् इति, उत्तम्भनम् इति रूपं निष्पद्यते।

**रूपलेखनप्रकार: –**

उद्+स्थानम् इत्यत्र ''तस्मादित्युत्तस्य'' ''आदे: परस्य'' स्थानेऽन्तरतम:'' इति सूत्रत्रयसहकारेण ''उद: स्थास्तम्भो: पूर्वस्य'' इति सूत्रेण सस्य स्थाने पूर्वसवर्णे थकारे कृते उद्+थ् थानम् इति स्थिते'' झरो झरि सवर्णे'' इति सूत्रेण पूर्वस्य थकारस्य विकल्पेन लोपे कृते उद्+थानम् इत्यवस्थायां ''खरि च'' इति सूत्रेण उद: दस्य चर्त्वेन तकारे कृते 'उत्थानम्' इति एकं रूपम्। थलोपाभावपक्षे तु 'उत्थ्थानम्' इति द्विथकारयुक्तं रूपं द्वितीयं सिद्धम्। उद्+स्तम्भनम् इत्यत्रापि तथैव थकारे, थलोपे दस्य तकारे उत्तम्भनम् इति रूपम्। थलोपाभावपक्षे तु उत्थ्तम्भनम् इत्येव रूपम्। थस्य चर्त्वं तु न शङ्क्यम्, चर्त्वं प्रति थकारस्य असिद्धत्वात्।

**अन्यद् उदाहरणम् –**

उद् + स्थापक: = उत्थापक:, उद् + स्थिति: = उत्थिति: इत्यपि ज्ञेयम्।

**७५. झय: ह: अन्यतरस्याम्** इतिच्छेद:। झय् इति प्रत्याहार:, तत्र झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प इति वर्णा:। तत: परस्य हकारस्य विकल्पेन पूर्वसवर्ण: भवति।

**उदाहरणस्य विश्लेषणम् –**

वाग् + हरि: इत्यत्र गकार: झय् वर्ण: तस्मात् पर: हकार: विद्यते, अनेन सूत्रेण हस्य स्थाने पूर्वसवर्णे घकारे कृते वाग्घरि: इतिरूपम्। पूर्वसवर्णाभावे तु वाग्हरि: इत्येवरूपम्। हस्य पूर्वसवर्णत्वेन 'क ख ग ङ' एष्वपि कश्चन कथं न भवति ? केवल: घकार एव कथं जात: ? इति प्रश्ने आह – एषु कवर्गीये घकार: एव हकारेण सदृशतम: बाह्यप्रयत्नसाम्यात्। अत: हकारस्य पूर्वसवर्ण: वर्गस्य चतुर्थवर्ण: एव भवति, न अन्य:। प्रतिवर्गं चतुर्थ: एव नादघोषसंवारमहाप्राण:, हकार: अपि तादृश: एव।

**रूपलेखनप्रकार: –**

वाक् + हरि: इत्यत्र ''झलां जशोऽन्ते'' इति सूत्रेण ककारस्य जश्त्वे गकारे कृते वाग् + हरि: इत्यवस्थायां ''झयोहोऽन्यतरस्याम्'' इति सूत्रेण हस्य स्थाने विकल्पेन पूर्वसवर्णे घकारे कृते वाग्घरि: इति प्रथमं रूपम्। पूर्वसवर्णाभावे तु 'वाग्हरि:' इत्येव रूपं भवति।

**अन्यानि उदाहरणानि –**

तद् + हितम् – तद्धितम्। दिग् + हस्ती = दिग्घस्ती। अज् + हलौ = अज्झलौ। स्याद् + हलि = स्याद्धलि। रत्नमुड् + हरति = रत्नमुड्ढरति इत्यादीनि।

**७६. श: छ: अटि** इतिच्छेद:। अट् इति प्रत्याहार:। झय: परस्य शकारस्य स्थाने वा छकार: भवति, यदि तस्मात् पर: अट्वर्ण: स्यात्।

**उदाहरणस्य विश्लेषणम् –**

तद् + शिव: इत्यत्र शकारयोगे दस्य श्चुत्वेन जकारे तज् + शिव: ''खरि च'' इत्यनेन जस्य चर्त्वेन चकारे तच् + शिव: इत्यवस्थायाम् अनेन सूत्रेण शस्य विकल्पेन छत्वं, विधीयते इकाररूपस्य अट: परत:

७७. **मोऽनुस्वारः ८/३/२३**

मान्तस्य पदस्यानुस्वारो हलि। हरिं वन्दे।

७८. **नश्चापदान्तस्य झलि ८/३/२५**

नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते। झलि किम् ? मन्यते।

---

सत्त्वात्। छत्वाभावे शकार एव, अतः उक्तरूपद्वयं भवति।

**रूपलेखनप्रकारः -**

तद् + शिवः इत्यत्र ''स्तोः श्चुना श्चुः'' इति सूत्रेण दस्य श्चुत्वेन जकारे कृते तज् + शिवः इति जाते ''खरि च'' इत्यनेन सूत्रेण जस्य चर्त्वेन चकारे कृते सति तच् + शिवः इत्यवस्थायां ''शश्छोऽटि'' इति सूत्रेण - विकल्पेन शस्य छत्वे कृते तच्छिवः इति रूपम्। छत्वाभावे तु तच्शिवः इति द्वितीयं रूपं सिद्धम्।

**वार्तिकम् -**

छत्वकरणे अम्प्रत्याहारे परे इति वक्तव्यम् इति भावः। अर्थात् शकारात् परे अमि सति इति। तद्यथा तद् + श्लोकेन इत्यत्र दस्य जकारे, जस्य चर्त्वेन चकारे तच्श्लोकेन इति जाते शस्य छत्वं भवति, यतो हि तस्मात्परः अम्प्रत्याहारवर्णः लकारः विद्यते। अटि इति कथनमात्रे तु छत्वं न स्यात्, लस्य अट्त्वाभावात्।

**अन्यानि उदाहरणानि -**

वाक् + शूरः = वाक्छूरः, वाक्शूरः।
जगत् + शान्तिः = जगच्छान्तिः, जगच्शान्तिः।
यावत् + शक्यम् = यावच्छक्यम्, यावच्शक्यम्।
भवत् + शिष्यः = भवच्छिष्यः, भवच्शिष्यः।
त्वत् + शङ्का = त्वच्छङ्का; त्वच्शङ्का।
मत् + श्लाघा = मच्छ्लाघा, मच्श्लाघा इत्यादीनि।

७७. **मः अनुस्वारः।** मान्तस्य पदस्य अनुस्वारः भवति हलि = व्यञ्जने वर्णे परे। किं सम्पूर्णपदस्य स्थाने अनुस्वारः कार्यः ? न हि, केवलस्य अन्त्यस्य मकारस्य, 'अलोऽन्त्यस्य' इति परिभाषया।

**उदाहरणस्य विश्लेषणम् -**

हरिम् + वन्दे इत्यत्र पदान्तस्य मकारस्य अनुस्वारः भवति यतो हि तस्मात्परः हल् वर्णः विद्यते, अतः हरिं वन्दे इति।

**रूपलेखनप्रकारः -**

हरिम् + वन्दे इत्यत्र ''मोऽनुस्वारः'' इति सूत्रेण मस्य अनुस्वारे हरिं वन्दे इति रूपं सिद्धम्।

**अन्यानि उदाहरणानि -**

विद्यालयम् + गच्छति = विद्यालयं गच्छति। पुस्तकम् + पठति = पुस्तकं पठति । आचार्यम् + नमति = आचार्यं नमति। प्रभुम् + भजति = प्रभुं भजति इत्यादीनि।

७८. **नः च अपदान्तस्य झलि** इति पदच्छेदः। अपदान्तस्य नकारस्य मकारस्य च झलि परे अनुस्वारः भवति।

७९. **अनुस्वारस्य ययि परसवर्णः। ८/४/५८**

स्पष्टम् । शान्तः।

८०. **वा पदान्तस्य ८/४/५९**

त्वङ्करोषि, त्वं करोषि।

---

**उदाहरणविश्लेषणम् –**

यशान् + सि, आक्रम् + स्यते इत्यत्र क्रमशः अपदान्तः नकारः मकारश्च विद्यते, ततः परः सकारः झल्रूपी। अपदान्तः इत्युक्ते पदमध्यस्थः। अतः नकारस्य मकारस्य अनुस्वारः विधीयते अत्र। इत्थं यशांसि, आक्रंस्यते इति सिद्धिः।

**रूपलेखनप्रकारः –**

यशान् + सि इत्यवस्थायां ''नश्चापदान्तस्य झलि'' इति सूत्रेण अपदान्तस्य नकारस्य झल्परकत्वात् अनुस्वारे कृते यंशासि इति रूपं सिद्धम्। आक्रंस्यते इत्यत्र मस्य अनुस्वारः इति ज्ञेयम्।

**अन्यानि उदाहरणानि –**

पयान् + सि = पयांसि। सरान् + सि = सरांसि।

सङ्गम् + स्यते = सङ्गंस्यते।, इत्यादीनि।

७९. अनुस्वारस्य स्थाने परसवर्णः भवति ययि = यय्प्रत्याहारे परे। यस्य वर्गस्य परवर्णः, तद्वर्गीयः पञ्चमः वर्णः परसवर्णत्वेन करणीयः।

**उदाहरणस्य विश्लेषणम् –**

शां + तः इत्यत्र आकारात्परः अनुस्वारः, विद्यते, तस्माच्च परः तवर्गतकारः अस्ति। अनेन सूत्रेण अनुस्वारस्य स्थाने परसवर्णत्वेन तवर्गस्य पञ्चमः नकारः विधीयते, अतः शान्तः इति रूपम्।

**रूपलेखनप्रकारः –**

शाम् + तः इत्यत्र ''नश्चापदान्तस्य झलि'' इति सूत्रेण अपदान्तस्य मकारस्य स्थाने अनुस्वारे कृते शां + तः इति जाते ''अनुस्वारस्य ययि परसवर्णः'' इति सूत्रेण अनुस्वारस्य परसवर्णत्वेन नकारे कृते 'शान्तः' इति सिद्धम्।

**विशेषः** अनुस्वारस्य नासिका स्थानम् अस्ति, अतः तस्य स्थाने वर्गस्य पञ्चमः वर्णः करणीयः। कवर्गे परे ङकारः, चवर्गे ञकारः, टवर्गे णकारः, तवर्गे नकार, पवर्गे तु मकारः इति।

**अन्यानि उदाहरणानि –**

अं + कितः = अङ्कितः। अं + चितः = अञ्चितः। गुं + जनम् = गुञ्जनम्। कुं + ठितः = कुण्ठितः। गुं + फितः = गुम्फितः इत्यादीनि।

८०. पदान्तस्य अनुस्वारस्य विकल्पेन परसवर्णः भवति। अपदान्तस्य तु नित्यम् इति ज्ञेयम्।

**उदाहरणस्य विश्लेषणम् –**

त्वं + करोषि इत्यत्र 'त्वं' पदम् अस्ति, तस्य अन्ते अनुस्वारः पदान्तः। तस्य अनुस्वारस्य परसवर्णे ङकारे विकल्पेन कृते 'त्वङ्करोषि' इति रूपम्। परसवर्णाभावे तु 'त्वं करोषि' इति।

**रूपलेखनप्रकारः –**

त्वम् + करोषि इत्यत्र ''मोऽनुस्वार'' इति सूत्रेण मकारस्य अनुस्वारे कृते 'त्वं करोषि' इति स्थिते ''अनुस्वारस्य ययि परसवर्णः'' इति सूत्रेण अनुस्वारस्य नित्यं परसवर्णे प्राप्ते तं प्रबाध्य ''वा पदान्तस्य'' इति

८१. **मो राजि समः क्वौ ८/३/२५**
क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्।

८२. **हे मपरे वा ८/३/२६**
मपरे हकारे परे मस्य मो वा। किम् ह्मलयति, किं ह्मलयति। (यवलपरे यवला वा) किँय् ह्यः, किं ह्यः। किँव् ह्वलयति, किं ह्वलयति। किँल् ह्लादयति, किं ह्लादयति।

---

सूत्रेण विकल्पेन परसवर्णे ङकारे कृते 'त्वङ्करोषि' इति रूपं सिद्धम्। परसवर्णाभावपक्षे तु 'त्वं' करोषि' इति रूपमपि सिद्धम्।

**अन्यानि उदाहरणानि -**

त्वं + चलसि = त्वञ्चलसि, त्वं चलसि। शत्रुं + जयति = शत्रुञ्जयति, शत्रुं जयति। अहं + यामि = अहँय्यामि, अहं यामि इत्यादीनि।

८१. **मः राजि समः क्वौ** इतिच्छेदः। क्वौ इति क्वि (क्विप्) इत्यस्य सप्तम्येकवचने रूपम् । प्रत्ययेन तदन्तग्रहणम्, अतः क्वौ परे इत्यस्य क्विबन्ते परे इत्यर्थः। इत्थम् – क्विप्प्रत्ययान्ते राज्शब्दे परे 'सम्' इत्युपसर्गस्य मस्य म एव भवति, न पुनः ''मोऽनुस्वारः'' इति अनुस्वारः इत्याशयः।

**उदाहरणस्य विश्लेषणम् -**

'सम्राट्' इत्यत्र सम् + राट् इत्यवस्थायां ''मोऽनुस्वारः'' इति प्राप्तम्। अनेन सूत्रेण अवस्थाविशेषे समः मस्य मकार एव विधीयते, अतः 'सम्राट' इति रूपम्। यत्र राज्धातुः परः न भवति, तत्र तु अनुस्वारः भवति। यथा - संरावः इत्यादौ।

**रूपलेखनप्रकारः -**

सम् + राट् इत्यत्र ''मोऽनुस्वारः'' इति सूत्रेण पदान्तस्य मकारस्य अनुस्वारे प्राप्ते तं प्रबाध्य ''मो राजि समः क्वौ'' इति सूत्रेण मकारस्य मकारे एव कृते वर्णसम्मेलने 'सम्राट्' इति रूपं निष्पन्नम्।

**विशेषः** उपसर्गः अपि पदं भवति, अतः 'सम्' इत्यत्र मस्य पदान्तत्वम् अस्तीति ज्ञेयम्।

८२. मः परः यस्मात् सः मपरः। तादृशे हकारे परे मस्य विकल्पेन म एव भवति। अर्थात् मपरहकारे परे मस्य मः, पक्षे अनुस्वारः।

**उदाहरणस्य विश्लेषणम् -**

किम् + ह्मलयति इत्यत्र 'किम्' इत्यत्र पदान्तः मकारः, तस्माच्च मकारात्परः मपरहकारः 'ह्म' इति विद्यते। अतः अत्र ''मोऽनुस्वारः'' इति प्राप्तम् अनुस्वारं प्रबाध्य अनेन सूत्रेण मस्य विकल्पेन मकार एव विधीयते। पक्षे तु अनुस्वारः भवति, तत्र किं ह्मलयति इति रूपम्।

**रूपलेखनप्रकारः -**

किम् + ह्मलयति इत्यत्र ''हे मपरे वा'' इति सूत्रेण विकल्पेन मस्य मकारे कृते किम् ह्मलयति इतिरूपम्। पक्षे तु अनुस्वारे सति किं ह्मलयति इति रूपमपि सिद्धम्।

**वार्तिकम् -**

यपरहकारे, वपरहकारे, लपरहकारे च परे मस्य विकल्पेन क्रमशः अनुनासिकाः यवलाः विधीयन्ते इति तात्पर्यम्।

**उदाहरणविश्लेषणम् -**

किम् + ह्यः इत्यत्र यपरहकारः विद्यते। अतः तस्मिन् परे मस्य विकल्पेन अनुनासिकः यकारः। किम् ह्वलयति इत्यत्र मस्य अनुनासिकः वकारः, वपरहकारपरत्वात्। किम् + ह्लादयति, इत्यत्र लपरहकारपरत्वात्

८३. **नपरे नः ८/३/२७**

नपरे हकारे मस्य नो वा। किन् ह्नुते, किं ह्नुते।

८४. **आद्यन्तौ टकितौ १/१/४६**

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः।

८५. **ङ्णोः कुक्टुक् शरि ८/३/२८**

वा स्तः। (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्) प्राङ्ख् षष्ठः,

---

मस्य अनुनासिकः लकारः। पक्षे तु सर्वत्र अनुस्वारः।

**रूपलेखनप्रकारः –**

किम् + ह्यः इत्यत्र ''मोऽनुस्वारः'' इति सूत्रेण मस्य अनुस्वारे प्राप्ते तं प्रबाध्य ''यवलपरे यवला वा'' इति वार्तिकेन मस्य विकल्पेन अनुनासिके यकारे (मस्यापि अनुनासिकत्वात्) कृते किँय् ह्यः इति रूपं सिद्धम्। पक्षे किं ह्यः इति अनुस्वारः। एवमेव अन्यत्रापि ज्ञेयम्।

८३. नपरहकारे परे मस्य विकल्पेन नकारः भवति। नः परः यस्मात् इति नपरः। नपरश्चासौ हकारः नपरहकारः, तस्मिन्।

**उदाहरणस्य विश्लेषणम् –**

किम् + ह्नुते इत्यत्र नपरहकारपरत्वात् मस्य अनुस्वारं प्रबाध्य अनेन नकारः विधीयते। नकाराभावे तु अनुस्वारः कार्यः।

**रूपलेखनप्रकारः –**

किम् + ह्नुते इत्यत्र 'मोऽनुस्वारः' इति सूत्रेण मस्य अनुस्वारे प्राप्ते तं प्रबाध्य ''नपरे नः'' इति सूत्रेण मस्य विकल्पेन नकारे कृते 'किन् ह्नुते' इति रूपम्। पक्षे तु अनुस्वारे कृते 'किं ह्नुते' इति रूपं सिद्धम्।

८४. अग्रे आगमाः वक्ष्यन्ते। कस्यापि विशिष्टवर्णस्य पुरः पश्चाद् वा कश्चन वर्णः वर्णसमुदायः वा मित्रवत् आगच्छति स आगमः उच्यते। स च यस्य उक्तः, तस्य कुत्र तिष्ठेत् इति व्यवस्थां सम्पादयन् आह – 'आद्यन्तौ' इति। आदिश्च अन्तश्च आद्यन्तौ। टश्च कश्च इति टकौ। टकौ इतौ = इत्संज्ञकौ ययोः तौ टकितौ, टित् कित् च इत्यर्थः। अर्थात् यस्य आगमस्य टकारः इत्, यस्य च ककारः इत् तौ टकितौ आगमौ यस्य उक्तौ, तस्य (आगमिनः) क्रमशः आद्यवयवः भवति, अन्तावयवश्च भवति। आगमः यस्य भवति स आगमी उच्यते। अर्थात् टिदागमः आगमिनः आदौ अवयवत्वेन तिष्ठति, किदागमश्च अन्तावयवत्वेन इति विवेकः।

८५. ङ्णोः कुक्टुक् शरि। शर् इति शषसवर्णानां बोधकः प्रत्याहारः। ङ् च ण् च ङ्णौ, तयोः ङ्णोः। अर्थात् शरि परे सति विकल्पेन ङकारस्य कुगागमः, णकारस्य च टुगागमः भवति। कुक् टुक् इत्यत्र क्रमशः क् इति ट् इति अवशिष्यते। एतौ कितौ स्तः।

**उदाहरणस्य विश्लेषणम् –**

प्राङ् + षष्ठः, सुगण् + षष्ठः इत्यत्र ङकारात् णकारात् च परः षकारः (शर्) अस्ति, अतः ''आद्यन्तौ टकितौ'' इति सूत्रानुसारं ङ्णोः क्रमशः कित्त्वात् अन्ते कुगागमः टुगागमश्च जातः अतः प्राङ् क् + षष्ठः, सुगण्ट्षष्ठः इति स्थितिः जाता। प्राङ्क्षष्ठः, प्राङ्षष्ठः। सुगण्ठ् षष्ठः, सुगण्ट् षष्ठः, सुगण् षष्ठः।

८६. **डः सि धुट् ८/३/२९**

डात् परस्य सस्य धुड् वा। षट्त्सन्तः, षट्सन्तः।

८७. **नश्च ८/३/३०**

नान्तात् परस्य सस्य धुड् वा। सन्त्सः, सन्सः।

---

**वार्तिकम् -**

शरि परे चयः (वर्गप्रथमवर्णाः) द्वितीयवर्णत्वेन विकल्पेन प्रयुज्यन्ते पौष्करसादेः मतानुसारम्। पौष्करसादिः कश्चन वैयाकरणः प्राचीनः।

**उदाहरणस्य विश्लेषणम् -**

प्राङ्क् षष्ठः, सुगण् ट् षष्ठः इत्यत्र शर्परत्वात् अनेन वार्तिकेन ककारटकारयोः खकारठकारौ विध ीयेते। अतः प्राङ्ख् षष्ठः, सुगण्ठ्षष्ठः इति रूपम्। पक्षे प्रथमवर्णः अपि तिष्ठति प्राङ्क्षष्ठः, सुगण्ट्षष्ठः इत्यपि। यत्र च आगम एव न भवति तस्मिन् पक्षे प्राङ्षष्ठः, सुगण् षष्ठः इति रूपम्।

**रूपलेखनप्रकारः -**

प्राङ् + षष्ठः इत्यत्र ''ङणोः कुक्टुक् शरि'' इति सूत्रेण ''आद्यन्तौ टकितौ'' इति सूत्रसहकारेण विकल्पेन ङकारस्य अन्तावयवे कुगागमेऽनुबन्धलोपे प्राङ्क्षष्ठः इति जाते, ''चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्'' इति वार्तिकेन ककारस्य विकल्पेन खकारे कृते प्राङ्ख् षष्ठः इति रूपम्। खकाराभावपक्षे प्राङ्क्षष्ठः = प्राङ्क्षष्ठः इति द्वितीयं रूपम्। आगमाभावे तु प्राङ् षष्ठः इति तृतीयं रूपं सिद्धम्।

८६. डकारात् अव्यवहितपरस्य = व्यवधानशून्यस्य परस्य सकारस्य विकल्पेन धुडागमः भवति। धुडागमस्य 'ध्' अवशिष्यते। अयञ्चः टित् अस्ति। टित्त्वात् सस्य आदौ भवति ''आद्यन्तौ०'' इति व्यवस्थया।

**उदाहरणस्य विश्लेषणम् -**

षड् + सन्तः इत्यत्र डकारात् साक्षात् परः सकारः अस्ति। अस्य सस्य आदौ धुडागमः अनेन विध ीयते। अतः षड् + ध् + सन्तः इत्यवस्था जाता, अत्र चर्त्वेन धस्य तकारे, डस्य च टकारे षट्त्सन्तः। ध ुडभावे षट्सन्तः इति रूपम्।

**रूपलेखनप्रकारः -**

षड् + सन्तः इत्यत्र ''डः सि धुट्'' इति सूत्रेण सस्य आदौ विकल्पेन धुडागमे अनुबन्धलोपे च कृते षड् + ध् + सन्तः इति जाते ''खरि च'' इति सूत्रेण धस्य चर्त्वेन तकारे कृते 'षड्त् सन्तः' इति स्थिते पुनः 'खरि च' इति सूत्रेण डकारस्य चर्त्वेन टकारे कृते 'षट्त्सन्तः' इति प्रथमं रूपम्। यत्र धुट् न कृतः तत्र डकारस्य चर्त्वेन टकारे कृते षट्सन्तः इति रूपं सिद्धम्।

**अन्यानि उदाहरणानि -**

सम्राड् + सत्यः = सम्राट्त्सत्यः, सम्राट्सत्यः। लिड् + सु = लिट्त्सु, लिट्सु इत्यादीनि।

८७. नान्तात् = नकारान्तात् परस्य सस्य अपि आदौ विकल्पेन धुडागमः भवति।

**उदाहरणस्य विश्लेषणम् -**

सन् + सः इत्यत्र सन् इति नकारान्तं पदम् अस्ति। ततः परश्च 'सः' इति सकारः वर्तते। अस्य सकारस्य अनेन सूत्रेण विकल्पेन आदौ धुडागमः क्रियते, तस्य च चर्त्वे सन्त्सः इति रूपम्। धुडभावे तु सन्सः इति।

**रूपलेखनप्रकारः -**

सन् + सः इत्यत्र ''नश्च'' इति सूत्रेण नकारात् परस्य सस्य आदौ विकल्पेन धुडागमेऽनुबन्धलोपे च कृते सन् + ध् + सः इति जाते ''खरि च'' इति सूत्रेण धस्य चर्त्वेन तकारे कृते सन्त्सः इति रूपम्। धुडभावे तु सन्सः इति रूपमपि सिद्धम्।

८८. **शि तुक् ८/३/३१**

पदान्तस्य नस्य शे परे तुग्वा। सञ्छम्भुः, सञ्च्छम्भुः, सञ्च्शम्भुः, सञ्शम्भुः।

८९. **ङमो ह्रस्वादचि ङमुण् नित्यम् ८/३/३२**

ह्रस्वात् परो यो ङम् तदन्तं यत्पदं, तस्मात्परस्याचो ङमुट् स्यात्। प्रत्यङ्ङात्मा, सुगण्णीशः, सन्नच्युतः।

---

**अन्यानि उदाहरणानि -**

त्रीन् + समुद्रान् = त्रीन्त्समुद्रान्, त्रीन्समुद्रान्। भगवान् + साधुं रक्षति = भगवान्त्साधुं, भगवान्साधुं रक्षति। विद्वान् + सहते = विद्वान्त्सहते, विद्वान्सहते इत्यादीनि।

८८. पदान्तः यः नकारः, तस्मात् शकारे परे, तस्य नकारस्य (तुक्) तुगागमः विकल्पेन भवति। तुक् इत्यत्र त् अवशिष्यते। अत्र ककारस्य इत्संज्ञात्वात् अयमागमः कित् अस्ति। अतः अयम् अन्तावयवत्वेन तिष्ठति।

**रूपलेखनप्रकारः -**

सन् + शम्भुः इत्यत्र ''शि तुक्'' इति सूत्रेण नस्य विकल्पेन तुगागमेऽनुबन्ध लोपे सन् + त् + शम्भुः इति स्थिते ''स्तोः श्चुना श्चुः'' इति सूत्रेण शकारयोगे तकारस्य चुत्वेन चकारे पुनश्च चकारयोगे नस्य ञकारे सञ्च्शम्भुः इत्यवस्थायां ''शश्छोऽटि'' इति सूत्रेण शस्य विकल्पेन छकारे सञ्च्छम्भुः इति स्थिते ''झरो झरि सवर्णे'' इति सूत्रेण विकल्पेन चकारस्य लोपे सञ्छम्भुः इति रूपम्। चलोपाभावे सञ्च्छम्भुः इति द्वितीयं रूपम्। छत्वाभावे चलोपाभावे च सञ्च्शम्भुः इति तृतीयं तथा तुगभावे सञ्शम्भुः इति चतुर्थं रूपं सिद्धम्।

८९. ङमः ह्रस्वाद् अचि ङमुट् नित्यम् इतिच्छेदः। ङम् इति प्रत्याहारः 'ङ् ण् न्' इति वर्णानां बोधकः। ङमुट् इति (ङम्+उट्) प्रत्येकं वर्णस्य उट्संयोगः अर्थात् ङुट्, णुट्, नुट् इति तात्पर्यम्। अतः सूत्रार्थः इत्थं करणीयः- ह्रस्वात् परः यः ङम् (ङ् ण् न्) तदन्तात् अचि परे सति, तस्य अचः आदौ ङमुडागमः भवति। अर्थात् ङकारात् परस्य अचः ङुट्, णकारत्परस्य णुट्, नकारात्परस्य च नुट् भवति इत्याशयः।

**उदाहरणस्य विश्लेषणम् -**

प्रत्यङ् + आत्मा इत्यत्र ह्रस्वात्परः ङम् ङकारः, तस्मात् परः 'आत्मा' इत्याकारः अच्, अस्य अचः आद्यवयवत्वेन ङुडागमः अनुबन्धलोपश्च भवति, अतः प्रत्यङ् + ङ् + आत्मा = प्रत्यङ्ङात्मा इति रूपम्। सुगण् + ईशः = सुगण् ण् ईशः = सुगण्णीशः। सन् + अच्युतः सन् + न् + अच्युतः = सन्नच्युतः इत्येवम्।

**रूपलेखनप्रकारः -**

प्रत्यङ् + आत्मा इत्यत्र ''ङमो ह्रस्वादचि ङमुण् नित्यम्'' इति सूत्रेण ङमः (ङकारात्) परस्य ''आत्मा'' इत्याकाररूपस्य अचः आदौ ङुडागमेऽनुबन्धलोपे प्रत्यङ् + ङ् + आत्मा इति दशायां वर्णसम्मेलने 'प्रत्यङ्ङात्मा' इति रूपं सिद्धम्। सुगण् + ईशः इत्यत्र णुट्, सन् + अच्युतः इत्यत्र नुट् भवति इति ध्येयम्।

**अन्यानि उदाहणानि -**

अस्मिन् + अपि = अस्मिन्नपि, हसन् + अश्नाति = हसन्नश्नाति इत्यादीनि।

९०. **समः सुटि ८/३/५**
समो रुः सुटि।

९१. **अत्रानुनासिकः पूर्वस्य तु वा ८/३/२**
अत्र रुप्रकरणे रोः पूर्वस्य अनुनासिको वा।

९२. **अनुनासिकात्परोऽनुस्वारः ८/३/२**
अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः।

९३. **खरवसानयोर्विसर्जनीयः ८/३/१५**
खरि अवसाने च पदान्तस्य रेफस्य विसर्गः स्यात्। (सम्पुङ्कानां सो वक्तव्यः) सँस्स्कर्ता।, संस्स्कर्ता।

---

९०. सम् इति उपसर्गस्य सुडागमे परे रुः भवति। स च तस्य अन्त्यस्य मकारस्य विधेयः 'अलोन्त्यस्य' इति न्यायात्। यथा सम् + स्कर्ता इत्यत्र मकारात् सुट् परः अस्ति, अतः मस्य रुत्वे सरु + स्कर्ता इति स्थिते –

९१. अत्र = रुप्रकरणे अर्थात् यत्र रुः भवति, तस्मिन् प्रकरणे रोः पूर्वस्य विकल्पेन अनुनासिकः भवति। तद्यथा – सँ रु + स्कर्ता इति जाते – –

९२. रुप्रकरणे यत्र अनुनासिकः न भवति, तस्मिन् पक्षे रोः पूर्वस्मात् अचः परः अनुस्वारागमः भवति। इत्थं रुप्रकरणे एकपक्षे अनुनासिकः, अपरत्र अनुस्वारश्च रोः पूर्वस्मात् परः भवति। तद्यथा – सँरु + स्कर्ता, संरु + स्कर्ता इत्येवं पक्षद्वयम्।

९३. खर् + अवसानयोः विसर्जनीयः। अर्थात् खरि परे अवसाने च पदान्तस्य रेफस्य विसर्गः भवति। विसर्जनीयः = विसर्गः। सँरु + स्कर्ता, संरु +स्कर्ता इत्यत्र 'रु' इत्यस्य उकारस्य अनुनासिकत्वप्रतिज्ञया ''उपदेशेऽजनुनासिक इत्'' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः'' इत्यनेन लोपे कृते सँर् + स्कर्ता, संर् + स्कर्ता इति स्थितौ ''खरवसानयोर्विसर्जनीयः'' इति सूत्रेण खरि परे रोः रेफस्य विसर्गे प्राप्ते ............. .

**वार्तिकम् –**

''संम्पुङ्कानां सो वक्तव्यः''। 'सम् पुम् कान्' इत्येषां यः रुः, तस्य रेफस्य सकारः भवति, न तु विसर्जनीयः। अत्र सँर् + स्कर्ता, संर् + स्कर्ता इत्यत्र समः रेफस्य सत्त्वात्, तत्स्थाने सत्वम् अनेन वार्तिकेन भवति, अतः संस्स्कर्ता, संस्स्कर्ता इति रुपद्वयं सिद्धं भवति।

**रूपलेखनप्रकारः –**

सम् + स्कर्ता इत्यत्र मस्य 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते तत्प्रबाध्य ''समः सुटि'' इति सूत्रेण समः मस्य रुत्वे 'अनुबन्धलोपे च कृते सर् + स्कर्ता इति स्थिते ''अत्रानुनासिकः पूर्वस्य तु वा'' इति सूत्रेण रोः पूर्वस्य विकल्पेन अनुनासिके कृते पक्षे ''अनुनासिकात्परोऽनुस्वारः'' इत्यनेन अनुस्वारागमे च कृते सँर् + स्कर्ता, संर् + स्कर्ता इति स्थितौ ''खरवसानयोर्विसर्जनीयः'' इति सूत्रेण रेफस्य स्थाने विसर्गे प्राप्ते, तत्प्रबाध्य ''सम्पुङ्कानां सो वक्तव्यः ''इति वार्तिकेन रेफस्य सकारे कृते सँस्स्कर्ता, संस्स्कर्ता इति रूपद्वयं सिद्धम्।

**अन्यानि उदाहरणानि –**

सँस्स्कारः, संस्स्कारः। सँस्स्कृतिः, संस्स्कृतिः। (अलङ्करणम् इत्यर्थः)

९४. **पुमः खय्यम्परे ८/३/६**
अम्परे खयि पुमो रुः। पुँस्कोकिलः, पुंस्कोकिलः।

९५. **नश्छव्यप्रशान् ८/३/७**
अम्परे छवि नान्तस्य पदस्य रुः स्यात्।

९६. **विसर्जनीयस्य सः ८/३/३४**
खरि। चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व। अप्रशान् किम?
प्रशान्तनोति। पदान्तस्येति किम् ? हन्ति।

---

९४. **पुमः खयि अम्परे** इतिच्छेदः। खय् इति प्रत्याहारः, तत्र वर्गाणां प्रथमद्वितीयाः वर्णाः भवन्ति। अम्प्रत्याहारान्तर्गताः वर्णाः यदि खयः परतः विद्यमानाः स्युः, तादृशः खय् अम्परः इत्युच्यते। अम्परे खयि परे पुम् शब्दस्य मकारस्य रुत्वं भवति इति सूत्राशयः।

**उदाहरणस्य विश्लेषणम् -**

पुम् + कोकिलः इत्यत्र पुमः परतः कोकिलशब्दस्य ककारः खय् विद्यते, तस्माच्च परः ओकारः अम्। अतः पुम् शब्दात् परतः अम्परकस्य खयः विद्यमानत्वात् अनेन सूत्रेण मस्य रुत्वं विधीयते, अन्यत्सर्वं सँस्कर्ता इतिवत्कार्यम्।

**रूपलेखनप्रकारः -**

पुम् + कोकिलः इत्यत्र ''पुमः खय्यम्परे'' इति सूत्रेण मस्य रुत्वे अनुबन्धलोपे पुर् + कोकिलः इति स्थिते ''अत्रानुनासिकः पूर्वस्य तु वा'' इति अनुनासिके वैकल्पिके कृते, पक्षे ''अनुनासिकात्परोऽनुस्वारः'' इत्यनुस्वारागमे पुँर् + कोकिलः पुंर् + कोकिलः इति जाते, रेफस्य ''खरवसानयो॰'' इति विसर्गे प्राप्ते तम्प्रबाध्य ''सम्पुङ्कानां सो वक्तव्यः'' इति वार्तिकेन रेफस्य सकारे कृते पुँस्कोकिलः, पुंस्कोकिलः इति रुपद्वयं सिद्धम्।

**अन्यानि उदाहरणानि -**

पुम् + चरित्रम् = पुँश्चरित्रम्, पुंश्चरित्रम्।
पुम् + खनित्रम् = पुँस्खनित्रम्, पुंस्खनित्रम् इत्यादीनि।

९५. **नः छवि अप्रशान्** इतिच्छेदः। अम्परके छवि परे सति नान्तस्य पदस्य रुः भवति, प्रशान् इति प्रदस्य तु न। 'अलोऽन्त्यस्य' इत्यनुसारं नान्तस्य पदस्य अन्त्यनकारस्य इति फलितम्।

**उदाहरणस्य विश्लेषणम् -**

चक्रिन् + त्रायस्व इत्यत्र 'चक्रिन्' इति नान्तं पदम्, ततश्च परः अम्परकः छव् 'त्र' इति विद्यते। तादृशे छवि परे चक्रिन् इति नान्तस्य पदस्य ''अलोऽन्त्यस्य'' इत्यनुसारम् अन्त्यस्य नकाररूपस्य अलः स्थाने अनेन रुत्वं विधीयते। ततश्च रुत्वप्रकरणे अनुनासिकत्वे अनुस्वारागमे रेफस्य विसर्गे च कृते चक्रिँः+त्रायस्व, चक्रिंः+त्रायस्व इति स्थिते विर्गस्य सत्वविधायकं सूत्रम् आह - ''विसर्जनीयस्य सः'' इति।

९६. खरि परे विसर्गस्य स्थाने सकारः भवति।

**उदाहरणस्य विश्लेषणम् -**

'त्रायस्व' इत्यत्र तकारः खरन्तर्गतः। तस्मिन् परे विसर्गस्य अनेन सकारः विधीयते चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व इति।

**रुपलेखनप्रकारः -**

चक्रिन् + त्रायस्व इत्यत्र ''नश्छव्यप्रशान्'' इति नस्य रुत्वेऽनुबन्धलोपे पूर्वस्य अनुनासिके, पक्षे

९७. **नॄन्पे ८/३/१०**

नॄनित्यस्य रुर्वा पे।

९८. **कुप्वोः × क × पौ च ८/३/३७**

कवर्गे पवर्गे च विसर्गस्य × क × पौ स्तः, चाद्विसर्गः।

नॄँ×पाहि, नॄं×पाहि, नॄँः पाहि, नॄंः पाहि, नॄन् पाहि।

---

अनुस्वारागमे ''खरवसानयोर्विसर्जनीयः'' रेफस्य च विसर्गे कृते ''विसर्जनीयस्य सः'' इति सूत्रेण विसर्गस्य स्थाने सकारे कृते चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व इति रूपद्वयं सिद्धम्।

**विशेषः -**

''नश्छव्यप्रशान्'' इति सूत्रेण प्रशान् शब्दस्य नस्य रुत्वं न भवति, अतः 'अप्रशान्' इत्युक्तं सूत्रे। यदि सूत्रे अप्रशान् इति निषेधः नाभविष्यत् तदा तु प्रशान्तनोति इत्यत्रापि नस्य रुत्वापत्तिः आपतिष्यत्। यदि 'पदान्तस्य' इति न उच्येत तर्हि अपदान्तस्य अपि 'हन्ति' इति नस्य रुत्वापत्तिः भवेत्।

**अन्यानि उदाहरणानि**

विद्वान् + चरति = विद्वाँश्चरति, विद्वांश्चरति।

कस्मिन् + तगाडे = कस्मिँस्तडागे, कस्मिंस्तडागे।

भवान् + छद्मी = भवाँश्छद्मी, भवांश्छद्मी।

पटीयान् + छात्रः = पटीयाँश्छात्रः, पटीयांश्छात्रः।

चञ्चुमान् + टिट्टिभः = चञ्चुमाँष्टिट्टिभः, चञ्चुमांष्टिट्टिभः इत्यादीनि।

९७. **नॄन् पे** इतिच्छेदः। पे = पकारे। पकारे परे '**नॄन्**' इति पदस्य ''अलोऽन्त्यस्य'' इति परिभाषया अन्त्यस्य नस्य विकल्पेन रुः भवति इति सूत्राशयः।

**उदाहरणस्य विश्लेषणम् -**

नॄन् + पाहि इत्यत्र नॄन् इति नकारात्परः 'पाहि' इत्यस्य पकारः विद्यमानः। अतः अस्य नस्य अनेन रुत्वं भवति, जाते च रुत्वे अनुनासिके, अनुस्वारागमे च नॄँर् + पाहि, नॄंर् + पाहि इत्यवस्थायां रेफस्य विसर्गे सति नॄँः पाहि, नॄंः पाहि इति स्थितौ -

९८. कुश्च पुश्च कुपू तयोः कुप्वोः। अर्थात् कवर्गे पवर्गे च परे विसर्गस्य क्रमशः जिह्वामूलीयः उपध्मानीयश्च भवति। विसर्गस्य विसर्गः अपि भवति इति सूत्रस्य तात्पर्यम्।

**उदाहरणस्य विश्लेषणम् -**

नॄँः पाहि, नॄंः पाहि इत्यवस्थायां पवर्गपरत्वात् विसर्गस्य उपध्मानीयः अनेन विधीयते, विसर्गस्य विसर्गः अपि पक्षे भवति। अतः नॄँ×पाहि, नॄं×पाहि, नॄँःपाहि, नॄंःपाहि इति रूपचतुष्कम्। रुत्वाभावे तु नॄन् पाहि इत्यपि रूपम्।

**रूपलेखनप्रकारः -**

नॄन् + पाहि इत्यत्र 'नॄन्पे' इति सूत्रेण ''अलोऽन्त्यस्य'' इति परिभाषासहकारेण विकल्पेन नस्य रुत्वेऽनुबन्धलोपे च कृते नॄर्+पाहि इति स्थितौ, रोः पूर्वस्य अनुनासिके, पक्षे अनुस्वारागमे च कृते ''खरवसानयोर्विसर्जनीयः'' इति सूत्रेण रेफस्य विसर्गे नॄँः पाहि, नॄंः पाहि इत्यवस्थायां ''कुप्वोः ×क×पौ च'' इति सूत्रेण विसर्गस्य उपध्मानीये, पक्षे विसर्गस्य विसर्गे च कृते नॄँ×पाहि, नॄं×पाहि, नॄँः पाहि, नॄंः पाहि इति रूपाणि सिध्यन्ति। रुत्वाभावे तु नॄन् पाहि इत्यपि साधुः प्रयोगः।

९९. **तस्य परमाम्रेडितम् ८/१/२**
द्विरुक्तस्य परमाम्रेडितं स्यात्।

१००. **कानाम्रेडिते ८/३/१२**
कान्नकारस्य रुः स्यादाम्रेडिते परे। काँस्कान्, कांस्कान्।

१०१. **छे च ६/१/७२**
ह्रस्वस्य छे तुग्वा। शिवच्छाया।

---

**अन्यानि उदाहणानि –**

नॄन् + प्रति = नॄँ ⨯ प्रति, नॄं ⨯ प्रति, नॄँः प्रति, नॄंः प्रति, नॄन्प्रति।
नॄन्+पालयति, नॄन्प्रतिषेधति इत्यादीनि।

९९. वीप्सार्थे शब्दस्य द्वित्वं भवति। तत्र द्विवारम् उक्तस्य यत् परम् = उत्तरं द्वितीयं वा पदं भवति, तस्य आम्रेडितसंज्ञा भवति। सूत्रमिदम् आम्रेडितसंज्ञाविधायकम्। यथा वीप्सायां कान् इत्यस्य द्वित्वे कृते 'कान् कान्' इति प्रयोगे परस्य 'कान्' इत्यस्य अनेन आम्रेडितसंज्ञा क्रियते। तस्याः संज्ञायाः अत्र किं प्रयोजनम् इति जिज्ञासायाम् वक्ष्यते 'कानाम्रेडिते' इति।

१००. कान् + आम्रेडिते इतिच्छेदः। आम्रेडिते = आम्रेडितसंज्ञके परे पूर्वस्य कान् शब्दस्य रुत्वं भवति। तच्च 'अलोऽन्त्यस्य' परिभाषया नकारस्य भवति इति व्यवस्था। अतः वृत्तौ लिखितम् – कान्नकारस्य इति। कानः नकारस्य इति भावः।

**उदाहरणस्य विश्लेषणम् –**

कान् कान् इति वीप्सायां द्वित्वे परस्य आम्रेडितसंज्ञायाम्, आम्रेडिते परे पूर्वस्य कानः नस्य रुत्वे अनुनासिके, अनुस्वारागमे, कृते रेफस्य विसर्गे प्राप्ते ''सम्पुङ्कानां.'' इति वार्तिकेन सकारे काँस्कान्, कांस्कान् इति।

**रूपलेखनप्रकारः –**

कान् + कान् इत्यत्र ''तस्य परमाम्रेडितम्'' इति सूत्रेण परस्य कान् शब्दस्य आम्रेडितसंज्ञायां कृतायां ''कानाम्रेडिते'' इति सूत्रेण 'अलोऽन्त्यस्य' इति परिभाषासहकारेण पूर्वस्य कान्शब्दस्य नकारस्य रुत्वे अनुबन्धलोपे रोः पूर्वस्य ''अत्रानुनासिकः पूर्वस्य तु वा'' इति सूत्रेण अनुनासिके, पक्षे च 'अनुनासिकात्परोऽनुस्वारः'' इति सूत्रेण अनुस्वारागमे काँर् + कान्, कांर् + कान् इति जाते ''खरवसानयोर्विसर्जनीयः'' इति सूत्रेण रेफस्य विसर्गे प्राप्ते तं प्रबाध्य ''सम्पुङ्कानां सो वक्तव्यः'' इति वार्तिकेन रेफस्य सकारे कृते काँस्कान्, कांस्कान् इति द्वे रूपे सिद्ध्यतः।

१०१. छकारे परे ह्रस्वस्य अचः 'तुक्' भवति। अयञ्च कित्। कित्त्वात् अचः अन्तावयवत्वेन प्रयुज्यते।

९०२.  'पदान्ताद् वा ६/१/७३

दीर्घात् पदान्ताच्छे तुग्वा। लक्ष्मीच्छाया, लक्ष्मीछाया।

"इति हल्सन्धिः"

---

**उदाहरणस्य विश्लेषणम् -**

शिव+छाया इत्यत्र ह्रस्वात् अकारात् परः छकारः विद्यते, तस्मिन् छकारे परे ह्रस्वस्य अकारस्य अन्तावयवः तुगागमः विधीयते, तस्य च छकारयोगे श्चुत्वे कृते शिवच्छाया इति।

**रूपलेखनप्रकारः -**

शिव+छाया इत्यत्र "छे च" इति सूत्रेण "आद्यन्तौ टकितौ" इति सहकारेण ह्रस्वस्य अकारस्य अन्तावयवे तुगागमेऽनुबन्धलोपे च कृते शिव त् छाया इति स्थितौ "स्तोःश्चुना श्चुः" इत्यनेन श्चुत्वे प्राप्ते, तस्य असिद्धत्वात् पूर्वं "झलां जशोऽन्ते" इति सूत्रेण जश्त्वेन तकारस्य दकारे शिव द् छाया इति जाते 'खरि च' इति चर्त्वे प्राप्ते, तस्यापि असिद्धत्वात् पूर्वं "स्तोः श्चुना श्चुः" इत्यनेन चुत्वेन दस्य जकारे कृते शिवज् छाया इति स्थिते "खरि च" इत्यनेन चर्त्वेन जस्य चकारे कृते 'शिवच्छाया' इति रूपं सिद्ध म्।

**अन्यानि उदाहरणानि -**

पदच्छेदः, वृक्षच्छाया, एकच्छत्रम्, गृहच्छादनम्, तृणच्छेद्यम् इत्यादीनि।

**१०२.** पदान्तात् दीर्घात् छे परे वैकल्पिकः तुक् भवति। अर्थात् पदान्ते यः दीर्घः स्वरः, तस्य अन्तावयवः तुक् भवति छकारे परे सति इति सूत्राशयः।

**उदाहरणस्य विश्लेषणम् -**

लक्ष्मीच्छाया, लक्ष्मीछाया इति। लक्ष्मी इति पदम्, तत्र पदान्ते दीर्घः ईकारः, तस्माच्च परः छाया इति छकारः। तस्मिन् छकारे परे पदान्तस्य दीर्घस्य ईकारस्य अन्तावयवः तुक् अनेन विधीयते। अयं तुगागमः विकल्पेन भवति, अतः पक्षे लक्ष्मीछाया इत्यपि रूपम्।

**रूपलेखनप्रकारः -**

लक्ष्मी+छाया इत्यत्र "पदान्ताद् वा" इति सूत्रेण विकल्पेन ईकारस्य अन्तावयवे तुगागमे लक्ष्मी+त्+छाया इति स्थिते तकारस्य जश्त्वेन दकारे, दस्य चुत्वेन जकारे,जस्य च चर्त्वेन चकारे कृते लक्ष्मीच्छाया इति रूपम्। तुगभावे लक्ष्मीछाया इति रूपं सिद्धम्।

## इति हल्सन्धिः

### अभ्यासार्थं प्रश्नाः

**वस्तुनिष्ठप्रश्नाः -**

१. रामस् + शेते इत्यत्र सन्धियुक्तं स्वरूपमस्ति

(क) रामो शेते (ख) राम शेते

(ग) रामश्शेते (घ) रामर् शेते ( )

२. 'झलां जशोऽन्ते' इत्यनेन पदान्ते स्युः -

(क) चरः (ख) हलः

(ग) जशः (घ) यरः ( )

३. अनुनासिकसन्धेरुदाहरणमस्ति
(क) रामष्टीकते (ख) एतन्मुरारिः
(ग) वागीशः (घ) उत्थानम् ( )

४. 'उत्थानम्' इत्यत्र सन्धिविच्छेदोऽस्ति -
(क) उद् + स्थानम् (ख) उद् + थानम्
(ग) उत्थ + थानम् (घ) उदः स्थानम् ( )

५. खरि झलां स्युः
(क) जशः (ख) चरः
(ग) यरः (घ) अचः ( )

६. झयः परस्य हस्य वा भवति -
(क) अनुनासिकः (ख) परस्वर्णः
(ग) पूर्वसवर्णः (घ) अनुस्वारः ( )

७. मान्तस्य पदस्यानुस्वारो भवति -
(क) खरि (ख) झरि
(ग) अटि (घ) हलि ( )

८. परसवर्णस्योदाहरणमस्ति -
(क) शान्तः (ख) वाग्घरिः
(ग) सम्राट् (घ) हरिं वन्दे ( )

९. आद्यन्तावयवौ स्तः -
(क) परसवर्ण - पूर्वसवर्णौ (ख) अज्झलौ
(ग) अनुस्वारानुनासिकौ (घ) टित्कितौ ( )

१०. कुगभावे रूपं भवति -
(क) प्राङ्ख्षष्ठः (ख) प्राङ्क्षष्ठः
(ग) प्राङ् षष्ठः (घ) प्राङ्ग्षष्ठः ( )

११. पदान्तस्य नस्य शि परे वा भवति -
(क) कुक् (ख) टुक्
(ग) तुक् (घ) धुट् ( )

१२. 'समः सुटि' इत्यनेन भवति -
(क) तुक् (ख) सुट्
(ग) रुः (घ) ङमुट् ( )

१३. द्विरुक्तस्य परं भवति -
(क) सवर्णसंज्ञम् (ख) इत्संज्ञम्
(ग) आम्रेडित-संज्ञम् (घ) वृद्धिसंज्ञम् ( )

------------

१४. श्चुत्वविधायकं सूत्रं विलिख्य तदुदाहरणानि लेख्यानि।

१५. अधोऽङ्कितानां पदानां प्रयोगसिद्धिः कार्या।
प्रश्नः, वाग्घरिः, षट्सन्तः, सुगण्णीशः।

१६. धुडागमः कदा भवति ? सोदाहरणं विवेचनीयम्।

# अथ विसर्गसन्धिः

१०३. **विसर्जनीयस्य सः ८/३/३४**

खरि। विष्णुस्त्राता।

१०४. **वा शरि ८/३/३६**

शरि विसर्गस्य विसर्गो वा। हरिः शेते, हरिश्शेते।

१०५. **ससजुषो रुः ८/२/६६**

पदान्तस्य सस्य सजुषश्च रुःस्यात्।

---

१०३. खरि परे विसर्गस्य सः भवति इति सूत्रार्थः।

**उदाहरणस्य विश्लेषणम् –**

विष्णुः + त्राता इत्यत्र विष्णुः इत्यत्र यः विसर्गः, तस्मात् परः त्राता इति तकारः खर्वर्णः। अतः अस्य विसर्गस्य स्थाने अनेन सकारादेशः भवति।

**रूपलेखनप्रकारः –**

विष्णुः+ त्राता इत्यत्र ''विसर्जनीयस्य स'' इति सूत्रेण विसर्गस्य स्थाने 'स्' आदेशे कृते'' विष्णुस्त्राता इति सिद्धम्।

**अन्यानि उदहाणानि –**

बालकः + तिष्ठति=बालकस्तिष्ठति, गौः + चरति = गौश्चरति इत्यादीनि।

**विशेष :** खर् प्रत्याहारान्तर्गतेषु के खे च परे विसर्गस्य जिह्वामूलीयः, पे फे परे तु उपध्मानीयः वा भवति। सूत्रं ''कुप्वोः ⨯ क ⨯ पौ च''। पक्षे विसर्गस्य विसर्गः अपि। रामः करोति, राम ⨯ करोति। देवदत्तः पचति, देवदत्त ⨯ पचति।

१०४. शरि प्रत्याहारे परे विसर्गस्य विकल्पेन विसर्ग एव भवति। पक्षे तु शरः अपि खरन्तर्गतत्वात् 'विसर्जनीस्य सः' इति स् अपि भवति।

**उदाहरणस्य विश्लेषणम् –**

हरिः + शेते इत्यत्र विसर्गात् शर् परः विद्यते। अतः विसर्गस्य अनेन विसर्गे 'हरिः शेते' इति। पक्षे तु सादेशे श्चुत्वे 'हरिश्शेते' इति रूपम्।

**रूपलेखनप्रकारः –**

हरिः + शेते इत्यत्र ''विसर्जनीयस्य सः'' इति सूत्रेण विसर्गस्य स्थाने सकारादेशे प्राप्ते, तं प्रबाध्य ''वा शरि'' इति सूत्रेण विकल्पेन विसर्गस्य विसर्गे एव कृते 'हरिः शेते' इति रूपम्। पक्षे तु विसर्गस्य सकारादेशे कृते हरिस्+शेते इत्यवस्थायां ''स्तोःश्चुना श्चुः'' इति सूत्रेण सस्य शकारयोगे शकारे कृते 'हरिश्शेते' इति रूपं सिद्धम्।

**अन्यानि उदहरणानि –**

रामः शृणोति रामश्शृणोति। पदार्थाः + सप्त = पदार्थाः सप्त, पदार्थास्सप्त इत्यादीनि।

१०५. स-सजुषोः रुः। पदस्य अन्ते स्थितस्य सस्य तथा सजुष् शब्दस्य अन्तिमवर्णस्य 'ष्' इत्यस्य रुः भवति।

**उदाहरणस्य विश्लेषणम् –**

'शिवस् + अर्च्यः इत्यत्र 'शिवस्' इति पदम् अस्ति, अस्य अन्ते सकारः विद्यमानः, तस्य सकारस्य अनेन रुत्वं विधीयते। 'रु' इत्यस्य उकारस्य इत्संज्ञायां लोपे च र् इति शिष्यते इति ध्येयम्। अतः शिवर् + अर्च्यः इति जाते –

**१०६. अतो रोरप्लुतादप्लुते ६/१/११३**

अप्लुतादत: परस्य रोरु: स्यादप्लुतेऽति। शिवोऽर्च्य:।

**१०७. हशि च ६/१/११४**

तथा। शिवो वन्द्य:।

---

१०६. **अत: रो: अप्लुतात् अप्लुते** इतिच्छेद:। 'अत:' इत्यत्र तपरत्वं कृतम् अस्ति, अत: अकार: समकालस्यैव अत्र ग्राहक:। 'अप्लुतात्' इति 'अत:' इति पदस्य विशेषणम्। सूत्रार्थ:-अप्लुतात् अकारात् पर: य: रु:, तस्य रो: स्थाने (रो: अवशिष्टस्य रेफस्य स्थाने) 'उ:' भवति अप्लुते अकारे परे इति।

**उदाहरणस्य विश्लेषणम् -**

शिवर् (रु) + अर्च्य: इत्यत्र 'शिव' इति वकारोत्तरवर्तिन: अप्लुतात् अकारात् पर: रु: विद्यते, तस्य स्थाने अनेन उत्वं भवति, यतो हि तस्मात् रो: पर: अप्लुत: अकार (अर्च्य: इति) विद्यते। अत: शिव+उ+अर्च्य: इति स्थिति: जाता गुणैकादेशे पूर्वरूपे च कृते 'शिवोऽर्च्य:' इति।

**रूपलेखनप्रकार: -**

शिवस् + अर्च्य: इत्यत्र ''ससजुषो रु:'' इति सूत्रेण सस्य स्थाने 'रु' आदेशोऽनुबन्धलोपे च कृते शिव+र् + अर्च्य: इति स्थिते ''अतो रोरप्लुतादप्लुते'' इति सूत्रेण रेफस्य 'उ' आदेशे शिव+उ+अर्च्य: इति जाते ''आद्गुण:'' इति सूत्रेण पूर्वपरयो: अकार-उकारयो: स्थाने गुणैकादेशे शिवो+अर्च्य: इति स्थितौ ''एङ:पदान्तादति'' इति सूत्रेण पूर्वरूपैकादेशे कृते ''शिवोऽर्च्य:'' इति सिद्धम्।

**अन्यानि उदाहणानि -**

रामस् + अयम् = रामोऽयम्। सस् + अपि = सोऽपि। उपस्थितस् + अस्मि
= उपस्थितोऽस्मि इत्यादीनि।

१०७. अप्लुतात् अकारात् परस्य रो: (रेफस्य) उत्वं भवति हशि परे सति इति सूत्रार्थ:। हश्प्रत्याहारे परे इति भाव:।

**उदाहरणस्य विश्लेषणम् -**

शिवस्+वन्द्य: इत्यत्र सस्य रुत्वे शिव र् (रु) + वन्द्य: इति स्थितौ, अयं रु: अप्लुतात् अकारात् पर: विद्यते, रो: परश्च हश् प्रत्याहारवर्ण: वकार: अस्ति, अत: 'हशि च' इत्यनेन उत्वे शिव उ वन्द्य: इति जाते गुणे शिवो वन्द्य: इति।

**रूपलेखनप्रकार: -**

'शिवर्+वन्द्य:' इत्यत्र ''ससजुषो रु:' इति सूत्रेण सस्य रुत्वेऽनुबन्धलोपे च कृते शिवर् + वन्द्य: इति जाते ''हशि च'' इति सूत्रेण रो: स्थाने उत्वे कृते सति शिव उ वन्द्य: इति स्थिते ''आद् गुण:'' इति सूत्रेण गुणैकादेशे 'शिवोवन्द्य:' इति रूपं सिद्धम्।

**अन्यानि उदाहरणानि -**

छात्रस् + गच्छति = छात्रो गच्छति। बालकस् + हसति इत्यादीनि।

१०८. **भोभगोअघोअपूर्वस्य योऽशि ८/३/१७**

एतत्पूर्वस्य रोर्यादेशोऽशि। देवा इह, देवायिह।

भोस्, भगोस् अघोस् इति सान्ताः निपाताः। तेषां रोर्यत्वे कृते -

१०९. **हलि सर्वेषाम् ८/३/२२**

भोभगोअघोअपूर्वस्य यस्य लोपः स्याद्धलि। भो देवाः।

भगो नमस्ते। अघो याहि।

---

१०८. **भो भगो अघो अपूर्वस्य यः अशि** इतिच्छेदः। भो पूर्वस्य, भगोपूर्वस्य अघोपूर्वस्य, अकारः पूर्वः यस्मात्, तस्य = अपूर्वस्य रोः यकारादेशः भवति अशि = अश्प्रत्याहारवर्णे परे।

**उदाहरणस्य विश्लेषणम् -**

देवास् + इह इत्यत्र सस्य रुत्वे कृते देवार् + इह इति स्थितौ अकारपूर्वकस्य रोः (रेफस्य) अनेन सूत्रेण यकारः विधीयते, यतो हि अस्मात् रोः परः अश्वर्णः इकारः विद्यते। अतः देवाय् + इह इति स्थितिः जाता - ततश्च यलोपः।

**रूपलेखनप्रकारः -**

देवास् + इह इत्यत्र ''ससजुषो रुः'' इति सूत्रेण सस्य रुत्वेऽनुबन्धलोपे देवार् + इह इति स्थितौ ''भो भगोअघोअपूर्वस्य योऽशि'' इति सूत्रेण रेफस्य स्थाने 'य्' आदेशे कृते देवाय् + इह इति जाते ''लोपः शाकल्यस्य'' इति सूत्रेण विकल्पेन य्लोपे देवा इह इति रूपम्। यलोपाभावे देवायिह इति रूपम्। देवा इह इत्यत्र गुणः तु न भवति, यलोपस्य गुणदृष्ट्या असिद्धत्वात्।

**विशेषः** भोस् भगोस् अघोस् इति सकारान्ताः निपाताः सन्ति, एषां प्रत्येकं सस्य रुत्वे भोर् भगोर् अघोर् इत्यवस्थायां प्रत्येकं रोः भोभगोअघोपूर्वत्वात् अनेन सूत्रेण यकारे कृते भोय्, भगोय् अघोय् इति स्थिते।

१०९. भोपूर्वस्य भगोपूर्वस्य अघोपूर्वस्य अकारपूर्वस्य च यकारस्य लोपः भवति हलि = व्यञ्जने वर्णे परे इति सर्वेषां मतम्।

**उदाहरणस्य विश्लेषणम् -**

भोय् + देवा, भगोय् + नमस्ते, अघोय् + याहि इत्यादौ एतत्पूर्वकस्य यकारस्य अनेन लोपः भवति। अतः भो देवाः। भगो नमस्ते। अघो याहि इति प्रयोगाः।

**रूपलेखनप्रकारः -**

भोस् + देवाः इत्यत्र ''ससजुषो रुः + इति सूत्रेण सस्य रुत्वेऽनुबन्धलोपे भोर् + देवाः इति जाते ''भोभगोअघोअपूर्वस्य योऽशि'' इति सूत्रेण रोः यकारे कृते भोय् + देवा इति जाते ''हलि सर्वेषाम्'' इति सूत्रेण यलोपे कृते भो देवाः इति सिद्धम्। एवमेव भगो नमस्ते, अघो याहि इत्याद्यपि ज्ञेयम्।

**११०. रोऽसुपि ८/३/३९**

अह्नो रेफादेशो न तु सुपि। अहरहः। अहर्गणः।

**१११. रो रि ८/३/१४**

रेफस्य रेफे परे लोपः।

**११२. ढ्रलोपे पूर्वस्य दीर्घोऽणः ६/३/१११**

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः। पुना रमते। हरी रम्यः। शम्भू राजते। अणः किम् ? तृढः। वृढः। मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रो रीति लोपे च प्राप्ते –

---

**११०. रः असुपि** इतिच्छेदः। 'अहन्' इत्यस्य रेफादेशः भवति, सुपि परे तु न भवति, अतः सुब्भिन्ने परे इति फलितम्। ''अलोऽन्त्यस्य'' इति परिभाषया अन्त्यस्य अलः नस्य रेफादेशः इति निष्कृष्टः अर्थः।

**उदाहरणस्य विश्लेषणम् –**

अहन् + अहः इत्यत्र 'अहन्' इति पूर्वपदम्। ततः परः सुप् नास्ति, अपितु सुब्भिन्नः 'अहः' इतिशब्दः। अतः नस्य रेफादेशः अहर् + अहः = अहरहः इति। एवमेव अहन् + गणः = अहर् + गण = अहर्गणः इति।

**रूपलेखनप्रकारः –**

अहन् + अहः इत्यत्र ''रोऽसुपि'' इति सूत्रेण 'अलोऽन्त्यस्य'' इति परिभाषासहकारेण अन्त्यस्य नकारस्य रेफादेशे अहर् + अहः इत्यवस्थायां वर्ण सम्मेलने 'अहर्गणः' इति सिद्धम्।

**१११. रः रि।** रः इति 'र्' इत्यस्य षष्ठ्येकवचनम्। रि इति सप्तम्येकवचनम्। रकारे परे पूर्वस्य रकारस्य लोपः भवति इति सूत्रार्थः।

**उदाहरणस्य विश्लेषणम्**

पुनर्+रमते इत्यत्र रेफे परे पूर्वस्य रेफस्य लोपः भवति, अतः पुन+रमते इति स्थितिः। (हरिस् – रुत्वे) हरिर् + रम्यः, (शम्भुस्–) शम्भुर् + राजते इत्यत्रापि रेफे परे पूर्वस्य रेफस्य लोपः भवति। इत्थं पुन+रमते, हरि+ रम्यः, शम्भु+ राजते अत्र रेफस्य लोपः जातः, तस्य च रेफस्य लोपनिमित्तमपि रेफ एव, स च निमित्तरूपः रेफः सम्प्रति परतः विद्यमानः अस्ति। अतः विशेषकार्यं दर्शयन् आह – 'ढ्रलोप.' इति।

**११२. ढ्रलोप इति** – ढ् च र् च इति ढ्रौ, ढ्रौ लोपयति इति ढ्रलोपः, तस्मिन् ढ्रलोपे। अतः ढलोपनिमित्ते ढकारे परे, रेफलोपनिमित्ते च रकारे परे पूर्वस्य अणः (अ इ उ इति वर्णत्रयस्य) दीर्घः भवति। अर्थात् 'रो रि' इत्यनेन यः रेफलोपः, तस्य निमित्तं परतः स्थित रेफः एव भवति, ढलोपोऽपि ढकारे परे एव भवति ('ढो ढे लोपः' इति सूत्रम्)। तादृशे ढकारस्य रेफस्य च लोपनिमित्ते क्रमशः ढकारे रेफे च परे पूर्वस्य अणः दीर्घविधानं भवति इत्याशयः।

**उदाहरणस्य विश्लेषणम् –**

पुन + रमते, हरि + रम्यः, शम्भु + राजते इत्यत्र रेफलोपनिमित्तस्य रेफस्य

**११३. विप्रतिषेधे परं कार्यम् १/४/२**

तुल्यबलविरोधे परं कार्यं स्यात्। इति लोपे प्राप्ते।

पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव। मनोरथः।

---

परत्वात् पूर्वस्य अणः क्रमशः अकारस्य, इकारस्य, उकारस्य च दीर्घत्वम् अनेन सूत्रेण विधीयते। अतः पुना रमते, हरी रम्यः शम्भू राजते इति प्रयोगाः उपपद्यन्ते।

**रूपलेखनप्रकारः –**

हरिस् + रम्यः इत्यत्र ''ससजुषो रुः'' इति सूत्रेण सस्य रुत्वेऽनुबन्धलोपे हरिर् + रम्यः इति स्थिते ''रो रि'' इति सूत्रेण रेफे परे पूर्वस्य रेफस्य लोपे कृते हरि+रम्यः इति जाते ''ढ्रलोपे पूर्वस्य दीर्घोऽणः'' इति सूत्रेण रेफलोपनिमित्ते रेफे परे पूर्वस्य इकाररूपस्य अणः दीर्घे कृते हरी रम्यः इति सिद्धम्।

**अन्यानि उदाहरणानि –**

अन्तर् + राष्ट्रियः = अन्ताराष्ट्रियः। अन्तर् + राज्यम = अन्ताराज्यम्। प्राता राजते। दुष्टाभी राक्षसीभिः। ढलोपस्य तु – लिढ् + ढः = लीढः। उढ् + ढः = ऊढः इत्यादीनि।

**प्रश्नः** 'ढ्रलोपे.' इत्यत्र अणः दीर्घः भवति इति किमर्थम् उक्तम् ? इति प्रश्ने आह – तृढः। वृढः। अर्थात् यदि अण् इति न उच्येत तर्हि तृढ् + ढः, वृढ् + ढः इत्यत्र ढकारलोपे सति ढलोपनिमित्ते परे पूर्वस्य ऋकारस्य अपि दीर्घत्वं प्राप्नोति। 'अणः' इति कथने तु, न भवति तत्र दीर्घः, ऋकारस्य अण्त्वाभावात् इति उत्तरम्। मनस्+रथः इत्यत्र सस्य ''ससजुषो रुः'' इति रुत्वेऽनुबन्धलोपे मनर्+रथः इत्यत्र हश्परत्वात्'' हशि च'' इति सूत्रेण रोः उत्वस्य प्राप्तिः, 'रो रि' इत्यनेन च पूर्वरेफलोपस्य प्राप्तिः युगपत् भवति। तत्र कतरत् कार्य पूर्वं करणीयम् ? इति व्यवस्थां सम्पादयन् आह ''विप्रतिषेधे.'' इति –

**११३.** विप्रतिषेधे. = तुल्यबलविरोधे परं कार्यं स्यात्। अन्यत्रान्यत्र कार्याय याभ्यां सूत्राभ्याम् अवसरः प्राप्तः एतादृशकार्यविधायकयोः सूत्रयोः एकत्र युगपत्प्राप्तिः तुल्यबलविरोधः उच्यते। तादृशे प्रसङ्गे पाणिनिकृतसूत्रपाठापेक्षं परवर्ति सूत्रं पूर्वं प्रवर्तते इति व्यवस्था।

**उदाहरणे सङ्गतिः –**

मनर् रथः इत्यत्र 'हशि च' इत्यस्य 'रो रि' इत्यस्य तुल्यबलयोः विरोधः सञ्जातः। तत्र एतेन सूत्रेण परकार्यं स्यात् इति निर्दिष्टम्। अत्र 'रो रि' इति हि 'हशि च' इत्यपेक्षया परसूत्रम्। अतः 'रो रि' इति पूर्वस्य रेफस्य लोपे प्राप्ते – आह – 'पूर्वत्रासिद्धम्.' इति। रो रि' इत्यस्य त्रैपादिकत्वात् 'हशि च' इति सपादसप्ताध्यायीस्थं प्रति असिद्धत्वात् पूर्वं 'हशि च' इत्यस्यैव प्रवृत्तिः तेन मन + उ + रथः इत्यत्र गुणे मनोरथः इति।

**रूपलेखनप्रकारः –**

मनस् + रथः इत्यत्र ''ससजुषो रुः'' इति सूत्रेण सस्य रुत्वेऽनुबन्धलोपे च कृते 'मनर् रथः' इत्यवस्थायां ''रो रि'' इत्यनेन पूर्वस्य रेफस्य लोपे 'हशि च' इत्यनेन उत्वे च प्राप्ते ''विप्रतिषेधे परं कार्यम्'' इति व्यवस्थानुसारं परत्वात् 'रो रि' इत्यनेन लोपे प्राप्ते ''पूर्वत्रासिद्धम्'' इति न्यायात् 'हशि च' इति सूत्रदृष्ट्या रोरीति त्रैपादिकस्य असिद्धत्वात् उत्वे कृते 'मन+उ+रथः' इति जाते 'आद्गुणः' इत्यनेन सूत्रेण 'ओ' गुणे एकादेशे कृते 'मनोरथः' इति रूपं सिद्धम्।

**११४. एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६/१/१३२**

अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि, न तु नञ्समासे। एष विष्णुः। स शम्भुः। अकोः किम् ? एषको रुद्रः। अनञ्समासे किम् ? असः शिवः। हलि किम् ? एषोऽत्र।

**११५. सोऽचि लोपे चेत्पादपूरणम् ६/१/१३४**

सस् इत्यस्य सोर्लोपः स्यादचि, पादश्चेल्लोपे सत्येव पूर्येत।

सेमामविड्ढिप्रभृतिम्। सैष दाशरथी रामः।

।। इति विसर्गसन्धिः।।

।। इति [१]पञ्चसन्धिप्रकरणम्।।

---

**११४. एतत्तदोः सुलोपः अकोः अनञ्समासे हलि** इतिच्छेदः। अकोः = ककाररहितयोः, एतत्तदोः = एतत्, तत् इति शब्दयोः यः प्रथमैकवचने सुप्रत्ययः, तस्य (सोः सस्य) लोपः भवति हलि परे, न तु नञ्समासे। सर्वनामशब्दानां टेः प्राक् स्वार्थे अकच्प्रत्ययः भवति। यत्र एतत्तदोः सर्वनामशब्दयोः अकच् न भवति, तादृशौ एतौ ककाररहितौ भवतः। ताभ्यां परः यः सुप्रत्ययः, तस्य हलि परे लोपः भवति, परन्तु नञ्समासे न भवति इति सूत्राशयः।

**उदाहरणस्य विश्लेषणम् –**

एषस् + विष्णुः, सस् + शम्भुः इत्यत्र ककाररहितौ एतत्तदौ वर्तेते, ताभ्यां परस्य सुप्रत्ययस्य लोपः भवति, यतो हि, व्यञ्जनवर्णः (हल्) ताभ्यां परः विद्यते। नञ्समासगतौ अपि एतौ शब्दौ अत्र न स्तः। अतः एष विष्णुः, स शम्भुः इति प्रयोगः भवति।

**रूपलेखनप्रकारः –**

एषस् + विष्णुः इत्यत्र हल्परत्वात् ककाररहितात् एतत्शब्दात् परस्य सुप्रत्ययस्य ''एतत्तदोः सुलोपोऽकोरनञ्समासे हलि'' इति सूत्रेण लोपे कृते, एष विष्णुः इति रूपं सिद्धम्। सस् + शम्भुः इत्यत्र सुलोपे स शम्भुः इति।

**प्रश्नः –**

अकोः किम् ? एषको रुद्रः। यदि ककाररहितयोः इति न उच्येत तर्हि ककारसहितस्य 'एषकस् + रुद्रः' इत्यत्र एतत्शब्दस्य अपि सुप्रत्ययस्य लोपापत्तिः स्यात्। अकोः इति कथने तु नैव सुलोपः, अस्य ककारसहितत्वात्। अनञ्समासे किम् ? असः शिवः। यदि नञ्समासे न प्रतिषिध्येत तर्हि असस् + शिवः इत्यत्र नञ्समासगतस्य तत् शब्दस्य अपि सुलोपापत्तिः स्यात्। कृते तत्र निषेधे तु न सुलोपः। यदि 'हलि' इति न उच्येत तर्हि अच्परस्यापि सुलोपापत्तिः भवेत्, तथा सति एषोऽत्र इति न सिद्ध्येत। 'हलि' इति कथने तु अस्य अच्परकत्वान्न सुलोपः इति भावः।

**अन्यानि उदाहरणानि –**

एष धर्मः सनातनः। एष रामः। स धावति। स कः इत्यादीनि।

**११५. सः अचि लोपे चेत् पादपूरणम्** इतिच्छेदः। 'सः' इति पदस्य प्रथमैकवचने सुप्रत्ययस्य अचि परेऽपि लोपः भवति, यदि पद्यस्य पादपूर्तिः सुलोपे कृते एव स्यात्। यदि विनाऽपि लोपं पादपूर्तिः संभवा, तदा तु सुलोपः न भवति इति फलितम्।

**उदाहरणस्य विश्लेषणम् –**

'सस्+इमामविड्ढिप्रभृतिम्' इत्यत्र यदि सुलोपः न क्रियेत तर्हि सस्य रुत्वे 'भो भगो.' इति यत्वे 'लोपः शाकल्यस्य' इति यलोपे यलोपस्य पूर्वत्रासिद्धरीत्या असिद्धत्वात् गुणाभावदशायां, 'सस् एष दाशरथी रामः'

इत्यत्र च उक्तरीत्या वृद्ध्यभावदशायां एकेन अधिकेन अक्षरेण पादपूर्तिः न भवति। अनुष्टुप्छन्दसि अष्टौ वर्णाः प्रतिपादम् अपेक्ष्यन्ते। सुलोपे कृते तु तस्य असिद्धत्वं न भवति, अतः गुणादेशः, वृद्ध्यादेशश्च संभवः। तथा सति 'सेमामविड्ढिप्रभृतिम्' इत्येवं ''सैष दाशरथी रामः'' इत्येवञ्च पादपूर्तिः भवति। अतः अत्र सोः लोपः भवति।

**रूपलेखनप्रकारः –**

'सस् + एष दाशरथी रामः' इत्यत्र पद्यस्य पादपूर्त्यर्थं अचि परे अपि ''सोऽचिलोपे चेत्पादपूरणम्'' इति सूत्रेण 'सः' इत्यस्य सोर्लोपे कृते 'स+एष.' इति जाते ''वृद्धिरेचि'' इति सूत्रेण वृद्ध्यैकादेशे कृते ''सैष दाशरथी रामः'' इति वाक्यं सिद्धम्।

**अन्यानि उदाहरणानि –**

सैष दाशरथी रामः, सैष राजा युधिष्ठिरः।सैष कर्णो महादानी, सैष भीमो महाबलः।। सैषस्तु लिखितः ग्रन्थः। [१]सन्धिः वर्णसन्धानम्। तत्र के पञ्चसन्धयः ? इति प्रश्ने–अच्सन्धिः, हल्सन्धिः, विसर्गसन्धिश्च इति त्रयः सन्धयः तु प्रसिद्धाः। चतुर्थः स्वादिसन्धिः। अच्सन्धौ प्रकृतिभावस्य पृथग्रूपेण निरूपितत्वात् प्रकृतिभावः पञ्चमः सन्धि इति विद्वाँसः आहुः।

## अभ्यासार्थ प्रश्नाः

**वस्तुनिष्ठ प्रश्नाः –**

१. 'विष्णुस्त्राता' पदस्य सन्धिविच्छेदोऽस्ति –

(क) विष्णुष् + त्राता (ख) विष्णुः + त्राता
(ग) विष्णु + त्राता (घ) विष्णो + त्राता ( )

२. ''ससजुषो रुः'' इति सूत्रेण भवति –

(क) सः (ख) सजुषः
(ग) रुः (घ) आगमः ( )

३. 'शिवोऽर्च्यः' इत्यस्य सन्धिविच्छेदोऽस्ति –

(क) शिवाः + अर्च्यः (ख) शिव + अर्च्यः
(ग) शिवोस् + अर्च्यः (घ) शिवस् + अर्च्यः ( )

४. रेफस्य लोपो भवति –

(क) द्विरेफे परे (ख) सुपि परे
(ग) रेफे परे (घ) हशि परे ( )

५. 'मनोरथः' इत्यत्र सन्धिविच्छेदोऽस्ति

(क) मनसा + रथः (ख) मनस् + रथः
(ग) मनोः + अथः (घ) मनर् + अथः ( )

६. विप्रतिषेधे कार्यं स्यात् –

(क) असिद्धं (ख) सिद्धं
(ग) पूर्वं (घ) परं ( )

----------

७. ''विसर्जनीयस्य सः'' इति सूत्रं सोदाहरणं व्याख्येयम्।

८. ''हशि चे'' ति सूत्रस्यार्थो लेख्यः।

९. निम्नाङ्कितपदानां ससूत्रं सिद्धिः कार्या।

हरिः शेते, शिवोऽर्च्यः, अहरहः, पुना रमते

१०. अधोलिखितानां पदानां सन्धिः कार्यः।

देवास् + इह, भोस् + देवाः, हरिस् + रम्यः, सस् + शम्भुः।

# प्रयोगार्थाः

*अच्सन्धिः*

**सुद्ध्युपास्यः** विद्वानों के उपासनीय
**मध्वरिः** 'मधु' नामक दैत्य के शत्रु (भगवान विष्णु)
**धात्रंशः** ब्रह्मा का अंश
**लाकृतिः** 'लृ' के समान टेढी आकृतिवाला (कृष्ण)
**हरये** हरि के लिए
**विष्णवे** विष्णु के लिए
**नायकः** नेता, प्रधान
**पावकः** पवित्रकर्त्ता या अग्नि
**गव्यम्** गौ का विकार, दुग्ध, दधि, घृत, गोमूत्र, गोबर आदि।
**नाव्यम्** नौका से उतरने योग्य जल
**गव्यूतिः** दो कोस
**उपेन्द्रः** इन्द्र के छोटे भाई (वामन भगवान्)
**गङ्गोदकम्** गङ्गा का जल
**कृष्णर्द्धिः** कृष्ण की समृद्धि
**तवल्कारः** तेरा लृकार
**हर इह** हे हरि! यहाँ
**विष्ण इह** हे विष्णु! यहाँ
**कृष्णैकत्वम्** कृष्ण की एकता
**गङ्गौघः** गङ्गा का प्रवाह
**देवैश्वर्यम्** देवताओं का ऐश्वर्य
**कृष्णौत्कण्ठ्यम्** कृष्ण की उत्कण्ठा
**उपैति** पास आता है
**उपैधते** समीप बढ़ता है।
**प्रष्ठौहः** प्रष्ठवाहका (सिखाने के लिये जिसके गले मे काष्ठ बाँध देते हैं, ऐसे बछडे को 'प्रष्ठवाट्' कहते हैं।
**उपेतः** समीप आया हुआ, युक्त
**मा भवान् प्रेदिधत्** आप अधिक न बढावें
**अक्षौहिणी** सेना - विशेष
**प्रौहः** अधिक तर्क या उत्तम तर्क करने वाला
**प्रौढः** चतुर, अधेड
**प्रौढिः** प्रौढता
**प्रैषः** प्रेरणा
**प्रैष्यः** नौकर
**सुखार्तः** सुख से प्राप्त हुआ, सुखी
**परमर्तः** परम प्राप्त, मुक्त
**वत्सतरार्णम्** बछडे का ऋण

**कम्बलार्णम्** कम्बल का ऋण
**वसनार्णम्** वस्त्र का ऋण
**ऋणार्णम्** ऋण चुकाने का ऋण
**प्रार्णम्** अधिक ऋण
**दशार्णः** दस किले वाला देश
**प्रार्च्छति** अधिक चलता है।
**प्रेजते** अधिक काँपता है।
**उपोषति** जलाता हैं
**शकन्धुः** शक देश का कूप
**कर्कन्धुः** बदर फल (बैर)
**मनीषा** बुद्धि
**मार्तण्डः** सूर्य
**शिवायों नमः** शिवजी को नमस्कार
**शिवेहि** हे शिव! आइये
**दैत्यारिः** दैत्यों का शत्रु (विष्णु)
**श्रीशः** लक्ष्मीपति (विष्णु)
**होतॄकरः** होता का ऋकार
**हरेऽव** हे हरि! रक्षा करो
**विष्णोऽव** हे विष्णु! रक्षा करो
**गोअग्रम्** गौ का अग्र भाग
**गवि** गौ में
**गवेन्द्रः** गोस्वामी
**आगच्छ कृष्ण३ अत्र गौश्चरति** हे कृष्ण! आइए यहाँ गौ चरती है।
**हरी एतौ** ये दोनों हरि (सिंह) हैं।
**विष्णू इमौ** ये दोनों विष्णु हैं।
**गङ्गे अमू** ये दोनों गङ्गाएँ हैं।
**अमी ईशाः** ये अधिपति हैं।
**रामकृष्णावमू आसाते** ये बलराम और श्रीकृष्ण बैठे हैं।
**अमुकेऽत्र** ये यहाँ हैं
**इ इन्द्रः** अरे! यह इन्द्र है।
**उ उमेशः** क्या यह उमेश हैं।
**आ एवं नु मन्यसे** क्या तुम ऐसा मानते हो ?
**आ एवं किल तत्** अरे यह वह है।
**ओष्णम्** कुछ गर्म
**अहो ईशाः** अहो ये अधिपति हैं।
**विष्णो इति** हे विष्णु! ऐसा
**किम्वुक्तम्** क्या कहा ?
**चक्रि अत्र** विष्णु यहाँ है।

| | |
|---|---|
| **गौर्यौ** | दो गौरी |
| **वाप्यश्वः** | वापी में घोड़ा |
| **ब्रह्मर्षिः** | ब्रह्म ऋषि, वशिष्ठ |
| **आर्च्छत्** | चला गया। |

### हल्सन्धिः

| | |
|---|---|
| **रामश्शेते** | राम सोते हैं। |
| **रामश्चिनोति** | श्री राम चुनते हैं |
| **सच्चित्** | सत् और ज्ञानस्वरूप |
| **शार्ङ्गिञ्जय** | हे भगवन्! आपकी जय हो। |
| **विश्नः** | विचलना या गति विशेष |
| **प्रश्नः** | पूछना। |
| **रामष्षष्ठः** | राम छठा है। |
| **रामष्टीकते** | राम आता है। |
| **पेष्टा** | पीसने वाला |
| **तट्टीका** | वह टीका |
| **चक्रिण्ढौकसे** | हे चक्रधारी! आप जाते हैं। |
| **षट् सन्तः** | छः सत्पुरुष |
| **षट्ते** | वे छः |
| **ईट्टे** | स्तुति करता है। |
| **सर्पिष्टमम्** | सबसे अच्छा घृत |
| **षण्णाम्** | छः का |
| **षण्णवतिः** | छियानवे (९६) |
| **षण्णगर्यः** | छः नगरियाँ |
| **सन्षष्ठः** | छठा श्रेष्ठ है। |
| **वागीशः** | बृहस्पति |
| **एतन्मुरारिः** | ये भगवान् मुरारी हैं। |
| **तन्मात्रम्** | केवल उतना |
| **चिन्मयम्** | ज्ञानरूप |
| **तल्लयः** | उसमें लीन होना |
| **विद्वाँल्लिखति** | पण्डित लिखता है। |
| **उत्थानम्** | उन्नति, उठना |
| **उत्तम्भनम्** | अवरोध |
| **वाग्घरिः** | बोलने में शेर |
| **तच्छिवः** | वह शिव |
| **तच्छ्लोकेन** | उस श्लोक से या उसकी कीर्ति से |
| **हरिं वन्दे** | हरि को मैं नमस्कार करता हूँ। |
| **यशांसि** | बहुत से यश |
| **आक्रंस्यते** | आक्रमण करेगा |
| **मन्यते** | मानता है |

**शान्तः** शान्त
**अङ्कितः** चिह्नित
**अञ्चितः** पूजित या गत
**कुण्ठितः** रुका हुआ
**दान्तः** जितेन्द्रिय
**गुम्फितः** गुंथा हुआ
**त्वं करोषि** तुम करते हो
**सँवत्सरः** वर्ष (संवत्)
**सम्राट्** राजा
**किं ह्मलयति** क्या चलाया जाता है ?
**किं ह्यः** कल क्या था ?
**किं ह्वलयति** क्या चलाया जाता है ?
**किं ह्लादयति** कौन वस्तु प्रसन्न करती है ?
**किं ह्नुते** क्या छिपाता है ?
**प्राङ्ख्षष्ठः** छठा पूजित है
**सुगण्षष्ठः** छठा गणितज्ञ है
**सन्त्सः** वह सत्पुरुष है
**सञ्छम्भुः** शम्भु सत्त्वरूप है
**प्रत्यङ्ङात्मा** अन्तरात्मा, जीवात्मा
**सुगण्णीशः** अच्छे गणितज्ञों का ईश
**सन्नच्युतः** भगवान् अच्युत सत्स्वरूप है
**संस्कर्ता** संस्कार करने वाला
**पुंस्कोकिलः** पुरुषकोकिल (कोयल)
**चक्रिँस्त्रायस्व** हे चक्रधारिन्, विष्णो रक्षा करो
**प्रशान्तनोति** शान्त पुरुष विस्तार करता है
**हन्ति** मारता है
**नॄँ पाहि** मनुष्यों की रक्षा करो
**काँस्कान्** किन किन को
**शिवच्छाया** शिव की छाया
**लक्ष्मीच्छाया** लक्ष्मी की छाया या शोभा

## विसर्गसन्धिः

**विष्णुस्त्राता** श्रीविष्णु रक्षक है
**हरिश्शेते** हरि सोते हैं
**शिवोऽर्च्यः** शिव पूजनीय हैं
**शिवो वन्द्यः** शिव वन्दनीय हैं।
**देवा इह** देवता यहाँ
**भो देवाः** हे देवों

**भगो नमस्ते** हे भगवन्! आपको नमस्कार है।
**अघो याहि** आप जाइये
**अहरहः** प्रतिदिन
**अहर्गणः** दिन समूह
**पुना रमते** फिर खेलता है
**हरी रम्यः** हरि रमणीय है
**शम्भू राजते** शम्भु शोभित हैं
**तृढः** उद्यत, तैयार हुआ
**मनोरथः** इच्छा

**एष विष्णुः** यह विष्णु भगवान् है
**स शम्भुः** वह शम्भु भगवान् है।
**एषको रुद्रः** यह भगवान् रुद्र है।
**असः शिवः** वह शिव नहीं है।
**एषोऽत्र** यह यहाँ है।
**सेमामविड्ढि प्रभृतिम्** इसे देने में आप समर्थ हैं। आप हमें इष प्रभृति प्रकृष्ट धारणा प्राप्त करावें।
**सैष दाशरथी रामः** ये वे दशरथ के पुत्र श्रीराम हैं।

**इति विसर्गसन्धिः**

**इति पञ्चसन्धिप्रकरणम्**

# अथ कारकप्रकरणम्

*(वैयाकरणसिद्धान्तकौमुद्याः)*

१.    **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा॥ २/३/४६**

नियतोपस्थितिकः प्रातिपदिकार्थः। मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे, लिङ्गमात्राद्याधिक्ये, परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्। प्रातिपदिकार्थमात्रे - उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानम्। लिङ्गमात्रे - तटः, तटी, तटम्। परिमाणमात्रे - द्रोणो व्रीहिः। वचनं संख्या। एकः। द्वौ। बहवः।

---

**पदच्छेदः** - प्रातिपदिकार्थ - लिङ्ग-परिमाण-वचनमात्रे प्रथमा।

**सूत्रविश्लेषणम् -**

यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः। अवधारणार्थकस्य मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे, लिङ्गमात्राधि क्ये परिमाणमात्रे संख्यामात्रे च प्रथमाविभक्तिः स्यात्।

**प्रातिपदिकार्थमात्रस्योदाहरणानि -**

अलिङ्गाः शब्दाः - उच्चैः, नीचैः।

नियतलिङ्गाः शब्दाः - कृष्णः, श्रीः, ज्ञानम्।

**लिङ्गमात्राधिक्यस्योदाहरणानि -**

अनियतलिङ्गाः शब्दाः - तटः, तटी, तटम्।

**परिमाणमात्रस्योदाहरणम् -** द्रोणो व्रीहिः

**वचनमात्रस्योदाहरणम् -** एकः। द्वौ। बहवः।

**उदाहरणविश्लेषणम्**

उच्चैस् + सु = सुलोपे, सस्य रुत्वे विसर्गे - उच्चैः। अव्ययम्।
नीचैस् + सु = सुलोपे, सस्य रुत्वे विसर्गे - नीचैः। अव्ययम्।
कृष्ण + सु = सस्य रुत्वे विसर्गे - कृष्णः। वासुदेवः।
श्री + सु = सस्य रुत्वे विसर्गे - श्रीः। लक्ष्मीः।
ज्ञान + सु = सोरमि पूर्वरूपे - ज्ञानम् । धीः।
तट + सु = सस्य रुत्वे विसर्गे - तटः। पुँल्लिङ्गम्।
तटी + सु = सुलोपे। तटी। स्त्रीलिङ्गम्।
तट + सु = सोरमि पूर्वरूपे। तटम्। नपुंसकलिङ्गम्।
द्रोणो व्रीहिः-    द्रोण + सु, व्रीहि + सु = सस्य रुत्वे विसर्गे
द्रोणः + व्रीहिः - द्रोणो व्रीहिः। परिमाणविशेषः।
एक + सु = एकः। पुंसि। एकसंख्याकः।
द्वि + औ = द्वौ। पुंसि। द्विसंख्याकौ।
बहु + जस् = बहवः। पुंसि। बहुसंख्याकाः।

**रूपलेखनप्रकारः -**

उच्चैः - उच्चैस् शब्दात् ''प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'' इति सूत्रेण प्रथमायां सुविभक्तौ अव्ययत्वात् ''अव्ययादाप्सुपः'' इति सुलोपे सस्य रुत्वे विसर्गे च कृते उच्चैः इति रूपं सिद्धम्। एवं नीचैः इत्यादयः शब्दाः।

२. **सम्बोधने ॥२।३।४७॥**

प्रथमा स्यात्। हे राम॥

३. **कर्तुरीप्सिततमं कर्म ॥१।४।४१।**

कर्तुः क्रियया आप्तुम् इष्टतमं कारकं कर्मसंज्ञं स्यात्

४. **कर्मणि द्वितीया ॥२।३।२॥**

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मादौ प्रथमा - हरिः सेव्यते। लक्ष्म्या सेवितः।

---

**अन्योदाहरणानि -**

प्रातः, सायम्, रामः, सरस्वती, पुण्यमित्यादीनि।

**२. सम्बोधने चेति -**

पदच्छेदः - सम्बोधने, च।

**सूत्रविश्लेषणम् -**

प्रातिपदिकात् सम्बोधनरूपे अधिके अर्थे प्रथमाविभक्तिः एव स्यात्

**उदाहरणविश्लेषणम् -**

हे राम + सु = सुलोपे - हे राम। हे दाशरथिन्।

**रूपलेखनप्रकारः -**

हे राम - राम शब्दात् ''सम्बोधने च'' इति सूत्रेण सम्बोधनार्थे प्रथमाविभक्तौ सौ ''एकवचनं सम्बुद्धिः'' इति सम्बुद्धिसंज्ञायाम् - सम्बुद्धिसंज्ञकसुलोपे हे राम इति सिद्धम्।

**अन्योदाहरणानि -**

हे देवदत्त!

हे लते!

हे कुलम्!

हे साधो!, हे हरे!

हे मातः!, हे देवि!

हे अम्ब! इत्यादीनि।

३. **कर्तुरीप्सिततममिति-**

पदच्छेदः - कर्तुः ईप्सिततमं कर्म इति।

**सूत्रविश्लेषणम् -**

कर्ता क्रियाद्वारा यद् आप्तुम् अतिशयेन इच्छति, तत् कारकं सत् कर्मसंज्ञं भवति। क्रियाजनकत्वं कारकत्वम्। क्रियान्वयित्वं वा कारकत्वम्। यथा - हरिं भजति। अत्र कर्ता भक्तः पूजादि-क्रियया हरिमाप्तुमिच्छति, अतः हरिः कर्मसंज्ञोऽस्ति।

४. **कर्मणि द्वितीयेति -**

पदच्छेदः - कर्मणि, द्वितीया।

**सूत्रविश्लेषणम् -**

तिङ् - कृत् - तद्धित - समासैश्च अनभिहिते = अनुक्ते कर्मणि द्वितीया - विभक्तिः स्यात्।

१. अनुक्ते कर्मणि द्वितीया यथा - हरिं भजति। अत्र तिङ्प्रत्ययः (लकारः) कर्तरि जातः। अतः तिङा कर्ता उक्तः, कर्म अनुक्तम् अस्ति। तस्माद् अनुक्ते कर्मणि हरिशब्दे द्वितीया-विभक्तिः।

(२) उक्ते कर्मणि तु प्रथमैव भवति - यथा

५.	**अकथितं च ॥१।४।५१॥**

अपादानादि-विशैषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

**दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।**

**कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्।**

गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलान् ओदनं पचति। गर्गान् शतं दण्डयति। व्रजम् अवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षम् अवचिनोति फलानि। माणवकं धर्मं ब्रूते शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्रामम् अजां नयति हरति कर्षति वहति वा।

---

(१) हरिः सेव्यते। इह लकारः कर्मणि जातः। अतः कर्म उक्तम्। तस्माद् हरिशब्दे प्रथमा। (२) लक्ष्म्या सेवितः। अत्रापि क्त-प्रत्ययः कर्मणि एव। कर्म उक्तम्। तस्मात् सेवितः (हरिः) इत्यत्र प्रथमा।

**उदाहरणविश्लेषणम् -**

हरिं भजति - कर्मणि द्वितीया, हरिं भजति। विष्णुं सेवते।

**रूपलेखनप्रकारः**

(१) हरिं भजति अत्र ''कर्तुरीप्सिततमं कर्म'' इति सूत्रेण हरिशब्दस्य कर्मसंज्ञायां 'कर्मणि द्वितीया'' इति द्वितीया-विभक्तौ हरिं भजतीति वाक्यं साधु।

**अन्योदाहरणानि -**

अनुक्ते कर्मणि - देवदत्तः ओदनं पचति। पुस्तकं पठति। अश्वं बध्नाति ग्रामं गच्छति इत्यादीनि।

५.	**अकथितञ्चेति -**

पदच्छेदः - अकथितम्, च।

**सूत्रविश्लेषणम् -**

अकथितम् इत्यस्य अविवक्षितम् इत्यर्थः। यत् कारकं अपादानत्वादियोग्यं सदपि, तेन रूपेण अविवक्षितं भवेत्, तत् कर्मसंज्ञं भवति। एतादृशं कर्म प्रधानं न भवति, अतः गौणम् अप्रधानं वा तत्। यदि तस्य कारकस्य विषये अपादानादिरूपेण वक्तुः विवक्षा भवेत् तदा तु तस्य कर्मसंज्ञा न भवति, किन्तु अपादानादिसंज्ञैव। एतादृशाः धातवः द्विकर्मकाः उच्यन्ते। दुह् - याच् - पचादयो षोडश धातवः द्विकर्मका धातवः परिगणिताः सन्ति। गां दोग्धि पयः इत्यादिषूदाहरणेषु कर्मद्वयं विद्यते। तत्र एकं प्रधानं कर्म अन्यच्च अकथितं कर्म अस्ति। अकथितस्य एव कर्मसंज्ञा अनेन सूत्रेण कर्त्तव्या।

**उदाहरणविश्लेषणम् -**

**( १ ) गां दोग्धि पयः** - इह गौः अपादानम्। तस्य अपादानरूपेण अविवक्षायाम् ''अकथितं च'' इति सूत्रेण कर्मसंज्ञायां द्वितीया भवति।

**( २ ) बलिं याचते वसुधाम्** - अत्र बलेः अपादानत्वस्य अविवक्षायां तस्य कर्मसंज्ञा द्वितीया च।

**( ३ ) अविनीतं विनयं याचते** - अत्र अविनीतम् इति गौण-कर्म, अतः द्वितीया।

**( ४ ) तण्डुलान् ओदनं पचति** - वाक्येऽस्मिन् तण्डुलान् इति गौणकर्म। अतः पूर्ववत् कर्मसंज्ञायां द्वितीया।

**( ५ ) गर्गान् शतं दण्डयति** - अत्र गर्गान् इति गौणकर्म। कर्मत्वाद् द्वितीया विभक्तिः।

**अर्थनिबन्धनेयं संज्ञा।**

बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते, वक्तीत्यादि।

६.  **अधिशीङ्स्थासां कर्म ॥१।४।४६॥**

अधिपूर्वाणाम् एषाम् आधार: कर्म स्यात्।

अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरि:।

---

**( ६ ) व्रजम् अवरुणद्धि गाम्** – व्रजे अधिकरणत्वस्य अविवक्षायां गौण – कर्मत्वात् द्वितीया।

**( ७ ) माणवकं पन्थानं पृच्छति** – माणवके करणत्वस्य अविवक्षायां कर्मत्वाद् द्वितीया।

**( ८ ) वृक्षम् अवचिनोति फलानि** – वृक्षे अपादानत्वस्य अविवक्षायां कर्मत्वाद् द्वितीया।

**( ९ ) माणवकं धर्मं ब्रूते शास्ति वा** – माणवकाय धर्मं बोधयति इत्यर्थ:।

**( १० ) शतं जयति देवदत्तम्** – इह देवदत्ते अपादानत्वस्याविवक्षायाम्, अकथितं कर्म, द्वितीया च।

**( ११ ) सुधां क्षीरनिधिं मथ्नाति** – क्षीरनिधे: सकाशात् सुधां प्राप्नोति इत्यर्थकेऽस्मिन् वाक्ये क्षीरनिधौ अपादानत्वस्याविवक्षायां कर्मसंज्ञा द्वितीया च।

**( १२ ) देवदत्तं शतं मुष्णाति** – देवदत्ते अपादानत्वस्याविवक्षायां कर्मत्वाद् द्वितीया।

**( १३ ) ग्रामम् अजां नयति हरति कर्षति वहति वा** – ग्रामे अजां

प्रापयति इत्यर्थके वाक्ये ग्रामे अधिकरणत्वस्याविवक्षायां कर्मसंज्ञा द्वितीया च।

**अर्थनिबन्धनेयमिति –**

'अकथितञ्च' इति सूत्रेण दुह्याचादिकारिकापठितानां द्विकर्मकधातूनां मुख्यकर्मणा यस्य योगो भवति, तस्य या कर्मसंज्ञा विधीयते, सा अर्थमूलिकाऽस्ति। अत: याच्धातुसमानार्थकस्य भिक्ष्धातो: मुख्यकर्मणा योगेऽपि ''अकथितञ्च' इति सूत्रेण अपादानत्वादिरूपेण अविवक्षितस्य कर्मसंज्ञा द्वितीया च कार्या।

**उदाहरणविश्लेषणम् –**

**( १ ) बलिं भिक्षते वसुधाम्** – अत्रापि बले: अपादानत्वस्याविवक्षायाम् 'अकथितञ्चे' ति सूत्रेण कर्मसंज्ञा द्वितीया च।

**( २ ) माणवकं धर्मं भाषते, वक्तीत्यादि** – इहापि माणवके सम्प्रदानत्वस्य अविवक्षायां, कर्मसंज्ञा द्वितीया च।

**रूपलेखनप्रकार: –**

**( १ ) बलिं भिक्षते वसुधाम्** – अत्र याच्धातुसमानार्थकस्य भिक्ष्धातो:  कर्मणा योगे बले: अपादानत्वस्याविवक्षायाम् ''अकथितञ्च'' इति सूत्रेण कर्मसंज्ञायां ''कर्मणि द्वितीया'' इति द्वितीयायां बलिं भिक्षते वसुधामिति सिद्धम्

**( ६ ) पदच्छेद:** – अधि – शीङ् – स्थाआसाम् कर्म।

**सूत्रविश्लेषणम् –**

अधि+शीङ् धातो., अधि+स्था धातो:, अधि + आस् धातो: प्रयोगे आधारकारकस्य कर्मसंज्ञा भवति।

| उपसर्गा: + धातव: | | रूपाणि | आधारस्य कर्मसंज्ञा | कर्त्ता |
|---|---|---|---|---|
| अधि + शीङ् | = | अधिशेते | वैकुण्ठं | हरि: |
| अधि + स्था | = | अधितिष्ठति | वैकुण्ठं | हरि: |
| अधि + आस् | = | अध्यास्ते | वैकुण्ठं | हरि: |

**रूपलेखनप्रकार: –**

१. अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरि: – अत्र 'अधि-शीङ् स्थासां कर्म' इति सूत्रेण आधारस्य वैकुण्ठस्य कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीया विभक्तौ 'अधिशेते वैकुण्ठं हरि:', अधि

७. **उपान्वध्याङ्वसः ॥१।४।४१॥**

उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति, अनुवसति, अधिवसति, आवसति वा वैकुण्ठं हरिः।

(वा.) अभुक्त्यर्थस्य न। वने उपवसति।

८. **लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः॥ १/४/९०**

---

तिष्ठति वैकुण्ठं हरिः, अध्यास्ते वैकुण्ठं हरिः इति वाक्यत्रयं सिद्धम्।

**अन्यान्युदाहरणानि –**

१. याचको भूमिमधिशेते।
२. कृषकः क्षेत्रम् अधितिष्ठति।
३. बालकः गृहम् अध्यास्ते।
४. गुरुः कक्षाम् अधितिष्ठति।
५. वयं भारतम् अधितिष्ठामः।
६. भगवान् शिवः श्मशानम् अधिशेते।
७. अधिष्ठाता छात्रावासम् अधितिष्ठति।
८. पिता पूजामन्दिरम् अध्यास्ते।
९. सर्पःबिलमधिशेते।
१०. राजा राजप्रासादम् अधिशेते। इत्यादीनि।

७. पदच्छेदः – उप + अनु + अधि + आङ् वसः।

**सूत्र-विश्लेषणम् –**

उपपूर्वस्य, अनुपूर्वस्य, अधिपूर्वस्य, आङ्पूर्वस्य च वस् धातोराधारः कारकं कर्मसंज्ञं स्यात्।

**उदाहरणविश्लेषणम् –**

| उपसर्गाः | | धातुः | | रूपाणि | आधारस्य कर्मसंज्ञा | अर्थः |
|---|---|---|---|---|---|---|
| उप | + | वस् | = | उपवसति | वैकुण्ठं हरिः | हरिः वैकुण्ठे वसति |
| अनु | + | वस् | = | अनुवसति | वैकुण्ठं हरिः | हरिः वैकुण्ठे वसति |
| अधि | + | वस् | = | अधिवसति | वैकुण्ठं हरिः | हरिः वैकुण्ठे वसति |
| आङ् | + | वस् | = | आवसति | वैकुण्ठं हरिः | हरिः वैकुण्ठे वसति |

**रूपलेखनप्रकारः –**

१. उपवसति, अनुवसति, अधिवसति, आवसति वां वैकुण्ठं हरिः। हरिः वैकुण्ठे वसति इत्यर्थे ''उपान्वध्याङ्वसः'' इति सूत्रेण उप+वस्-धातोः प्रयोगे आधारस्य वैकुण्ठस्य कर्मसंज्ञायां ''कर्मणि द्वितीया'' इति द्वितीया – विभक्तौ (१) उपवसति वैकुण्ठं हरिः इति वाक्यं सिद्धम्। एवमेव (२) अनुवसति वैकुण्ठं हरिः, (३) अधिवसति वैकुण्ठं हरिः, (४) आवसति वैकुण्ठं हरिः इति रूपाणि सिद्धानि।

**अन्योदाहरणानि –**

उपवसति, अनुवसति, अधिवसति आवसति वा सिंहोऽरण्यम्। हरिः वनम् उपवसति।

**भोजननिवृत्त्यर्थे** तु **'वने उपवसति'** इति वाक्यम्। वने उपवासं करोति इत्यर्थः। भोजननिवृत्त्यर्थे (उपवासार्थे) तु उपपूर्वकवस्धातोः आधारस्य कर्मसंज्ञा न भवति इति वार्तिकाशयः।

८. **पदच्छेदः**–लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रति+परि + अनवः।

**सूत्रविश्लेषणम्**

– ज्ञापकार्थविषयभूते, इत्थम्भूताख्यानार्थविषये, भागार्थविषयभूते, वीप्सार्थविषयभूते च प्रति परि अनु इत्येते कर्मप्रवचनीयसंज्ञकाः भवन्ति। एष्वर्थेषु विषयभूतेषु प्रत्यादयः उक्तसंज्ञाः स्युः। लक्षणे – वृक्षं प्रति परि अनु वा विद्योतते विद्युत्। इत्थम्भूताख्याने – भक्तो विष्णुं प्रति परि अनु वा। भागे – लक्ष्मीर्हरिं प्रति परि अनु वा। वीप्सायाम् – वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्। एषु किं ? परिषिञ्चति।

---

ततः ''कर्मप्रवचनीययुक्ते द्वितीया'' इति सूत्रेण यस्य कर्मप्रवचनीयेन योगः, तत्र द्वितीयाविभक्तिः भवति।

**उदाहरणविश्लेषणम्** –

**१. लक्षणे –**

**वृक्षं प्रति परि अनु वा विद्योतते विद्युत्** अत्र वृक्षेण लक्ष्यमाणा विद्युत् विद्योतते इत्यर्थः। लक्षणेऽर्थे लक्षणेत्थमिति सूत्रेण प्रत्यादीनां कर्मप्रवचनीयसंज्ञायां तद्योगे वृक्षशब्दाद् द्वितीया।

**२. इत्थम्भूताख्याने –**

**भक्तो विष्णुं प्रति परि अनु वा** विष्णुविषयकभक्तिमान् इत्यर्थः। पूर्ववत् इत्थम्भूताख्यानेऽर्थे प्रत्यादीनां कर्मप्रवचनीयसंज्ञायाम्, द्वितीयाविभक्तिः।

**३. भागे –**

**लक्ष्मीर्हरिं प्रति परि अनु वा।** हरेर्भाग इत्यर्थः। प्रत्यादेः प्रत्येकं शब्दस्य कर्मप्रवचनीयसंज्ञात्वाद् तद्योगे 'हरिम्' इति द्वितीयाविभक्तिः।

**४. वीप्सायाम् –**

वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति। प्रत्येकं वृक्षं सिञ्चतीत्यर्थः। अत्रापि वीप्सायां प्रत्यादीनां कर्मप्रवचनीयत्वाद् तद्योगे 'वृक्षम्' इति द्वितीयाविभक्तिः।

**रूपलेखनप्रकारः –**

**१. वृक्षं प्रति परि अनु वा विद्योतते विद्युत्** – अत्र वृक्षेण लक्ष्यमाणा विद्युत् विद्योतते इत्यर्थके वाक्ये ''लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः'' इति सूत्रेण प्रत्यादीनां कर्मप्रवचनीयसंज्ञायां ''कर्मप्रवचनीययुक्ते द्वितीया'' इति सूत्रेण द्वितीयाविभक्तौ वृक्षं प्रति परि अनु वा विद्योतते विद्युत् इति सिद्धम्। एवम् अन्यत्र अपि।

**विशेषः** –

यत्र कर्मप्रवचनीयसंज्ञा भवति, तत्र प्रत्यादीनाम् उपसर्गसंज्ञा न भवति। अतः उपसर्गात् परतः विद्यमानस्य सिञ्चत्यादेः सस्य विधीयमानं षत्वम् उक्तवाक्येषु 'अनुसिञ्चति' इत्यत्र न भवति। यत्र तु एषां कर्मप्रवचनीयसंज्ञा न भवति तत्र एषाम् उपसर्गत्वात् षत्वं भवत्येव, यथा – 'परिषिञ्चति' इत्यादि।

९.	**कालाध्वनोरत्यन्तसंयोगे ॥२।३।५॥**

इह द्वितीया स्यात्। मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम् ? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः।

१०.	**साधकतमं करणम् ।१।४।४२।**

क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात्। तमब्ग्रहणं किम् ? गङ्गायां घोषः।

११.	**कर्तृकरणयोस्तृतीया॥२।३।३१९॥**

अनुक्ते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो बाली।

---

९.	**कालाध्वनोरिति** – पदच्छेदः – कालाध्वनोः, अत्यन्तसंयोगे।

**सूत्रविश्लेषणम् –**

गुणक्रियाद्रव्यैः सह कालाऽध्वनोः अत्यन्तसंयोगे सति कालाऽध्ववाचक शब्दाभ्यां द्वितीयाविभक्तिः स्यात्।

**उदाहरणविश्लेषणम् –**

| | | **कालस्यात्यन्तसंयोगः** | **अध्वनोऽत्यन्तसंयोगः** |
|---|---|---|---|
| गुणेन सह | = | मासं कल्याणी | क्रोशं कुटिला नदी |
| क्रियया सह | = | मासमधीते | क्रोशमधीते |
| द्रव्येण सह | = | मासं गुडधानाः | क्रोशं गिरिः। |

**रूपलेखनप्रकारः –**

मासं कल्याणी – अत्र कालवाचकमासशब्दस्य 'कल्याणी' इत्यनेन गुणेन सह अत्यन्तसंयोगे सति 'कालाध्वनोरत्यन्तसंयोगे' इति सूत्रेण कालवाचकात् मासशब्दाद् द्वितीयायां मासं कल्याणी इति वाक्यं सिद्धम्। एवं सर्वत्र।

**अन्योदाहरणानि –**

मासार्धं कल्याणी। मासद्वयमधीते। मासद्वयं गुडधानाः। क्रोशद्वयं सरला सरित्। क्रोशार्धमधीते। क्रोशद्वयं पर्वतः।

१०.	**पदच्छेदः** – साधकतमम् करणम्।

**सूत्रविश्लेषणम् –**

काचिदपि क्रिया फलं निष्पादयितुं क्रियते। फले एव क्रियायाः सिद्धिः भवति। तत्र क्रियासिद्धौ यत्कारकं प्रकृष्टतया उपकरोति तत् कारकं करणसज्ञं भवति।

**उदाहरणस्य प्राथमिकस्थितेर्विश्लेषणम् –**

**रामेण बाणेन हतो बाली** – अत्र हननक्रियायां प्रकृष्टोपकारकस्य बाणस्य करणसंज्ञा, तस्मात् तृतीयाविभक्तिः (बाणसंयोगेन एव प्राणवियोगरूपफलस्य निष्पन्नत्वात् बाणस्य क्रियासिद्धौ प्रकृष्टोपकारकता)।

११. **पदच्छेदः** – कर्तृ – करणयोः तृतीया।

**सूत्रविश्लेषणम्** – अनुक्ते कर्तरि, अनुक्ते करणे च तृतीया स्यात्

**उदाहरणविश्लेषणम् –**

'रामेण बाणेन हतो बाली' इति वाक्ये रामः कर्ता, बाणः करणम्। कर्मवाच्ये अस्मिन् वाक्ये कर्मणः उक्तत्वात् कर्ता करणञ्च उभे अनुक्ते स्तः, अतः तत्र अनेन सूत्रेण तृतीया, रामेण, बाणेन इति।

१२.	**सहयुक्तेऽप्रधाने ॥२।३।११॥**

सहार्थेन युक्तेऽप्रधाने तृतीया स्यात्। पुत्रेण सहागतः पिता।

१३.	**येनाङ्गविकारः ॥२।३।२०॥**

येनोङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते, ततः तृतीया स्यात्। अक्ष्णा काणः।
अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः। अङ्गविकारः किम् ? अक्षिकाणमस्य।

---

**रूपलेखनप्रकारः -**

**१. रामेण बाणेन हतो बाली -**

अत्र ''स्वतन्त्रः कर्ता'' इति सूत्रेण रामशब्दस्य कर्तृसंज्ञायां ''साधकतमं करणम्'' इति सूत्रेण बाणशब्दस्य करणसंज्ञायां कर्मणि प्रत्ययविधानाद् अनुक्ते कर्तरि करणे च ''कर्तृकरणयोस्तृतीया'' इति सूत्रेण तृतीयायां रामेण बाणेन हतो बाली इति सिद्धम्।

**अन्योदाहरणानि अभ्यासार्थम् -**

१.	भूपेन खड्गेन हतः खलोऽसौ।

२.	देवेन नेत्रेण नष्टः कामः।

३.	रामेण द्विचक्रिकया ग्रामः गतः।

१२.	**पदच्छेदः - सहयुक्ते, अप्रधाने।**

**सूत्रविश्लेषणम् -** सहार्थेन योगे अप्रधाने तृतीया भवति।

**उदाहरणविश्लेषणम् -**

**पुत्रेण सह आगतः पिता -** अत्र आगमनक्रियायां पिता प्रधानः। पुत्रश्च अप्रधानः। अतः अप्रधाने पुत्रे तृतीया विभक्तिः। (यस्य क्रियायां साक्षात् शाब्दः सम्बन्धः सः प्रधानः, यस्य न तादृशः सम्बन्धः सः अप्रधानः)।

**रूपलेखनप्रकारः-**

**१. पुत्रेण सह आगतः पिता -** अत्र ''सहयुक्तेऽप्रधाने'' इति सूत्रेण अप्रधाने पुत्रशब्दे तृतीयाविभक्तौ पुत्रेण सह आगतः पिता इति वाक्यं साधु।

**अन्योदाहरणानि -**

आयाति शिष्येण सह प्रवक्ता। राजा प्रजाभिः सह भाषते च ।। बालकः मात्रा सह भुङ्क्ते।

१३.	**पदच्छेदः - येन + अङ्गविकारः।**

**सूत्रविश्लेषणम् -**

येन विकृतेन अङ्गेन अङ्गिनः = अवयविनः विकारो दृश्यते, तस्माद् विकृताङ्गवाचिनः शब्दात् तृतीया भवति।

**उदाहरणविश्लेषणम् -**

अक्ष्णा काणः - अत्र अक्षि (अङ्गम्) विकृतमस्ति, तेनाङ्गिनो विकारो लक्ष्यते। अतः अक्षिशब्दात् प्रकृतसूत्रेण तृतीया भवति।

**रूपलेखनप्रकारः -**

**(१) अक्ष्णा काणः** अत्र - ''येनाङ्गविकारः'' इति सूत्रेण विकृताङ्गवाचकात् अक्षिशब्दात् तृतीयाविभक्तौ अक्ष्णा काणः।

**अन्योदाहरणानि -** कर्णाभ्यां बधिरः। पादेन खञ्जः। शिरसा खल्वाटः।

१४. **इत्थम्भूतलक्षणे ॥२।३।२१॥**

कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात्। जटाभिस्तापसः।

जटा-ज्ञाप्य-तापसत्व-विशिष्टः इत्यर्थः।

१५. **हेतौ - ॥२।३।२३॥**

हेत्वर्थे तृतीया स्यात्। द्रव्यादिसाधारणं निर्व्यापारसाधारणञ्च हेतुत्वम्। करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च। दण्डेन घटः। पुण्येन दृष्टो हरिः।

१६. **कर्मणा यमभिप्रैति स सम्प्रदानम् ॥१।४।३२॥**

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात्।

---

१४. **इत्थम्भूतलक्षण इति।**

**सूत्रविश्लेषणम् -**

येन लक्षणेन चिह्नेन वा कस्यापि विशेषप्रकारकत्वं ज्ञाप्यते। (येन लक्षणेन 'अयम् एतादृशः' इति सूच्यते।) तत्र लक्षणवाचके शब्दे तृतीया भवति।

**उदाहरणविश्लेषणम् -**

जटाभिस्तापसः - अत्र जटाः तापसत्वं सूचयन्ति। अतः तापसत्वज्ञापकाद् जटाशब्दाद् ''इत्थम्भूतलक्षणे'' इति सूत्रेण तृतीया भवति।

**रूपलेखनप्रकारः**

१. जटाभिस्तापसः अत्र ''इत्थम्भूतलक्षणे'' इति सूत्रेण लक्षणवाचकात् जटा शब्दात् तृतीयाविभक्तौ 'जटाभिस्तापसः' इति वाक्यं साधु।

**अन्योदाहरणानि -**

रक्तकूर्चैः यवनाः। पुस्तकैश्छात्रः। स्वर्णाभूषणै आढ्यः।

१५. **हेताविति -**

**सूत्रविश्लेषणम् -**

अत्र हेतुशब्दः कारणपर्यायः। कारणपर्यायात् हेतुवाचकात् शब्दात् तृतीयाविभक्तिः स्यात्। हेतुः द्रव्यगुणक्रियासाधकः निर्व्यापारः सव्यापारः वा भवति। करणं तु क्रियामात्रस्य साधकं कारकं सव्यापारं भवतीति हेतुकरणयोर्भेदः।

**उदाहरणविश्लेषणम् -**

द्रव्यं प्रति हेतोरुदाहरणम् - दण्डेन घटः। घटस्य हेतुर्दण्डः। अतः हेतौ तृतीया। क्रियां प्रति हेतोरुदाहरणम् - पुण्येन दृष्टः। दर्शनक्रियाया हेतुः पुण्यम्। अतः हेतौ तृतीया। गुणं प्रति हेतोरुदाहरणम् - अध्ययनेन वसति। अत्र अध्ययनं वासक्रियायाः कारणम्। अतः तत्र (कारणे) हेतौ तृतीया 'अध्ययनेन' इति।

**रूपलेखनप्रकारः -**

**१. दण्डेन घटः** अत्र घटस्य हेतु दण्डः, तस्माद् ''हेतौ'' इति सूत्रेण दण्डशब्दे तृतीयाविभक्तौ दण्डेन घटः इति सिद्धम्। एवं सर्वत्र।

**अन्योदाहरणानि** - पुण्येन जीवितः। पुण्येन तेजस्वी।अत्र फलस्य अपि हेतुशब्देन ग्रहणम् - अतः 'अध्ययनेन वसति', 'दक्षिणया भुङ्क्ते' इत्याद्यपि साधु।

१६. **पदच्छेदः** - कर्मणा यम् अभिप्रैति सः सम्प्रदानम्। कर्ता दानक्रियायाः कर्मणा यं उद्देश्यं करोति सः सम्प्रदानसंज्ञकः भवति। देयद्रव्यस्योद्देश्यं सम्प्रदानं भवतीति। यथा - विप्राय गां ददाति। अत्र दाता गोकर्मणा विप्रम् अभिप्रैति। अतः विप्रस्य सम्प्रदानत्वम्।

१७. **चतुर्थी सम्प्रदाने ।।२।३।१३।।**

विप्राय गां दादाति। अनभिहित इत्येव किम् ? दीयते अस्मै दानीयो विप्र:।

१८. **नम: स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च।।२।३।१६।।**

एभिर्योगे चतुर्थी स्यात्। हरये नम:। उपपदविभक्ते: कारकविभक्तिर्बलीयसी।

(परिभाषा)।

---

१७. **पदच्छेद: - चतुर्थी, सम्प्रदाने।**

**सूत्रविश्लेषणम्** - अनुक्ते - सम्प्रदाने - चतुर्थीविभक्तिर्भवति।

**उदाहरणविश्लेषणम्** - विप्राय गां दादाति - विप्रम् उद्दिश्य गां ददातीत्यर्थ:। अत्र दाता दानस्य

**( वा. ) तादर्थ्ये चतुर्थी वाच्या।** मुक्तये हरिं भजति। कर्मणा गवा विप्रम् उद्देश्यत्वेन पश्यति, अत: अस्य विप्रस्य सम्प्रदानसंज्ञा भवति, तत्र च चतुर्थीविधानात् 'विप्राय गां ददाति' इति वाक्यं साधु भवति।

**रूपलेखनप्रकार: -**

१. विप्राय गां ददाति - अत्र ''कर्मणा यमभिप्रैति स सम्प्रदानम्'' इत्यनेन विप्रस्य सम्प्रदानसंज्ञायां ''चतुर्थी सम्प्रदाने'' इति चतुर्थीविभक्तौ विप्राय गां ददातीति सिद्धम्।

**अन्यान्युदाहरणानि -**

१. याचकाय धनं ददाति।

२. भक्ताय सुखं ददाति।

३. बालकाय कथां कथयति इत्यपि साधु।

(कथारूपकर्मणा बालकम् अभिप्रैति वक्ता)।

**विशेष:** - अनुक्ते सम्प्रदाने एव चतुर्थी भवति। उक्ते तु सम्प्रदाने प्रथमैव। यथा 'दीयतेऽस्मै दानीयो विप्र:' इति वाक्ये दाधातो: सम्प्रदानार्थे अनीयर्प्रत्ययविधानात् सम्प्रदानमुक्तम्। अत: तत्र 'दानीय: विप्र:' इत्येवं प्रथमैव।

**तादर्थ्ये चतुर्थीति** - पदच्छेद: - तादर्थ्ये, चतुर्थी, वाच्या।

**उदाहरणविश्लेषणम् -**

मुक्तये हरिं भजति = अत्र भजनं मुक्त्यर्थम्। मुक्त्यै भजनमुपकारकम् मुक्तिसाधकं वा।

**रूपलेखनप्रकार: -**

१. मुक्तये हरिं भजति - अत्र तादर्थ्यं मुक्ति:। अत: ''तादर्थ्ये चतुर्थी वाच्या'' इति वार्तिकेन मुक्तिशब्दात् चतुर्थीविभक्तौ मुक्तये हरिं भजतीति वाक्यं साधु।

**अन्यान्युदाहरणानि -**

यूपाय दारु। कुण्डलाय हिरणयम्।। ओदनाय तण्डुला:। वस्त्रेभ्य: कार्पासम्।

१८. **नम:स्वस्तीति - पदच्छेद: - नम: - स्वस्ति - स्वाहा - स्वधा- अलं - वषड्योगात् च।** नमस्करोति देवान्। प्रजाभ्य: स्वस्ति। अग्नये स्वाहा। दैत्येभ्यो हरिरलं प्रभु: समर्थ: शक्त: इत्यादि। वषडिन्द्राय।

**सूत्रविश्लेषणम् -**

नम:, स्वस्ति, स्वाहा, स्वधा, अलं, वषड् एभि: योगे चतुर्थीविभक्ति: भवति।

**उदाहरणविश्लेषणम् -**

१. हरये नम: - 'नम:' इति शब्दस्य योगे हरिशब्दाच्चतुर्थी।

२. नमस्करोति - देवान् - अत्र नम: इत्यस्य योगे देवाच्चतुर्थी प्राप्ता। तां प्रबाध्य नमस्करोति इति क्रियायोगे कारकविभक्तेर्बलवत्वात् देवशब्दात् द्वितीया।

१९. **ध्रुवमपायेऽपादानम् ॥१।४।२४॥**

अपायो विश्लेषः। तस्मिन् साध्ये ध्रुवमवधिभूतं कारकम् अपादानं स्यात्।

२०. **अपादाने पञ्चमी ॥२।३।२१॥**

ग्रामादायाति। धावतोऽश्वात् पतति। कारकं किम् ? वृक्षस्य पर्णं पतति।

---

३. अग्नये स्वाहा – अग्न्युद्देश्यकं द्रव्यदानम्। अत्र स्वाहा इत्यस्य योगे अग्निशब्दाच्चतुर्थी।

४. पितृभ्यः स्वधा – पित्रुद्देश्यकं द्रव्यदानम्। अत्रापि स्वधा इत्यस्य योगे पितृशब्दात् चतुर्थी।

५. दैत्येभ्यो हरिरलं प्रभुः – अलं=समर्थः, प्रभुः वा। अलमित्यस्य योगे दैत्यशब्दात् चतुर्थी।

६ वषडिन्द्राय – अत्र वषड् इत्यस्य योगे इन्द्राच्चतुर्थी।

**रूपलेखनप्रकारः–**

१. हरये नमः अत्र नमः इत्यस्य योगे ''नमः स्वस्तिस्वाहास्वधा ऽलंवषड्योगाच्च'' इति सूत्रेण हरिशब्दाच्चतुर्थीविभक्तौ 'हरये नमः' इति सिद्धम्। एवं सर्वत्र।

**अन्यान्युदाहरणानि –**

गणेशाय नमः। शिष्याय स्वस्ति। सूर्याय स्वाहा। प्रपितामहाय स्वधा। खलेभ्यो भूपतिः अलम्। अलं मल्लः मल्लाय इत्यादीनि।

**विशेषः** पदविशेषयोगेन जायमाना विभक्तिः उपपदविभक्तिः भवति। यथा नमः योगे चतुर्थी। क्रियापदमाधारीकृत्य जायमाना कारकविभक्तिः। यथा – 'नमस्करोति देवान्' इति द्वितीया। अनयोः कारकविभक्तिः बलीयसी भवति।

१९. **पदच्छेदः– ध्रुवम्, अपाये, अपादानम्।**

**सूत्रविश्लेषणम् –**

अपाये = विभागे यद् ध्रुवम् – अवधिभूतं कारकं, तद् अपादानसञ्ज्ञं भवति। यस्मात् पृथक् भवति तत् इति भावः।

२०. अपादाने पञ्चमीति।

**सूत्रविश्लेषणम् –**

यस्य अपादानसंज्ञा, तत्र पञ्चमी भवति।

**उदाहरणविश्लेषणम् –**

१. ग्रामादायाति – अत्र ग्रामः अवधिभूतः – अस्ति। आगन्तुः ग्रामात् विभागः, अतः ग्रामः, विभागाश्रयः। तस्माच्च ग्रामशब्दात् अपादानसंज्ञकत्वात् पञ्चमी।

२. धावतोऽश्वात् पतति – अत्र यद्यपि अश्वः चलः तथापि पतनक्रियां प्रति तस्य अश्वस्य ध्रुवत्वम् = अवधित्वम् एव, अश्वारोहिणः तस्मात् अश्वात् एव विभागात्। अतः अश्वशब्दात् पञ्चमी।

**रूपलेखनप्रकारः –**

१. **ग्रामादायाति –** अत्र ग्रामः अवधिभूतः अस्ति। अपाये = विभागेः ''ध्रुवमपायेऽपादानमि'' ति सूत्रेण अवधिभूतस्य ग्रामस्य अपादानसंज्ञायाम् ''अपादाने पञ्चमी'' इति पञ्चमीविभक्तौ ग्रामादायातीति वाक्यं। सिद्धम् एवम् अन्यत्रापि।

**अन्योदाहरणानि –**

विद्यालयाद् आयाति। यानात् पतति। वृक्षात् पर्णं पतति।

**विशेषः –**

'वृक्षस्य पर्णं पतति' इत्यत्र तु वृक्षस्य सम्बन्धत्वेन कारकत्वाभावात् सति विभागाश्रयत्वेऽपि न अपादानसंज्ञा।

२१.  **जनिकर्तुः प्रकृति ॥१।४।३०॥**

जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते।

२२.  **षष्ठी शेषे ॥२।३।५०॥**

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः। तत्र षष्ठी स्यात्। राज्ञः पुरुषः। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधोदकस्योपस्कुरुते। भजे शम्भोश्चरणयोः। फलानां तृप्तः।

---

२१.  **जनिकर्तुरिति - पदच्छेदः - जनिकर्तुः प्रकृतिः।**

**सूत्रविश्लेषणम् -**

जनिः जन्म, उत्पत्तिः वा। तस्य उत्पत्तेः कर्ता जनिकर्ता, तस्य जनिकर्तुः या प्रकृतिः = यस्मात् (प्रकृतिभूतात्) जनिकर्ता जन्म लभते, तस्याः = प्रकृतेः जन्मस्थानस्य वा अपादानसंज्ञा भवति इति फलितार्थः।

**उदाहरणविश्लेषणम् -**

ब्रह्मणः प्रजाः प्रजायन्ते = हिरण्यगर्भात् प्रजाः उत्पद्यन्ते। अत्र उत्पत्तेः आश्रयः जायमानाः प्रजाः सन्ति, तासां हेतुभूतं ब्रह्म अपादानसंज्ञम्। अतः ब्रह्मशब्दात् पञ्चमी।

**रूपलेखनप्रकारः -**

१. ब्रह्मणः प्रजाः प्रजायन्ते - अत्र 'जनिकर्तुः प्रकृतिः' इति सूत्रेण ब्रह्म इत्यस्य अपादानसंज्ञायाम् ''अपादाने पञ्चमी'' इति पञ्चमीविभक्तौ ''ब्रह्मणः प्रजाः प्रजायन्ते'' इति सिद्धम्।

**अन्योदाहरणानि -**

पितुः पुत्रः प्रजायते। गोमयात् वृश्चिकाः जायन्ते। कामात् क्रोधः, इत्यादीनि।

२२.  **षष्ठी इति - पदच्छेदः - षष्ठी, शेषे।**

**सूत्रविश्लेषणम् -**

अस्मिन् प्रकरणे कर्मकरणसम्प्रदानापादानाधिकरणेषु द्वितीया - तृतीया - चतुर्थी - पञ्चमी - सप्तमी - विभक्तयः उक्ताः। प्रातिपदिकार्थादिषु प्रथमा विभक्तिरपि उक्ता। एभ्यः कर्तृकर्मादिभ्यः अतिरिक्तः कश्चन स्वस्वामिभावादिसम्बन्धः'शेषः' कथ्यते। तत्र षष्ठी भवति।

**उदाहरणविश्लेषणम्**

१. 'राज्ञः पुरुषः' इह स्वस्वामिभावरूपसम्बन्धत्वात् षष्ठी।

२. सतां गतम् - इह कर्तृत्वाविवक्षायां शेषषष्ठी।

३. सर्पिषो जानीते - इह करणत्वाविवक्षायां शेषषष्ठी।

४. मातुः स्मरति-मातरं स्मरति इत्यर्थः। कर्मत्वाविवक्षायां मातृशब्दात् शेषे षष्ठी।

५. एधोदकस्योपस्कुरुते-एधोदकं परिष्कुरुते इत्यर्थः। अत्र कर्मत्वाविवक्षायां षष्ठी।

६. भजे शम्भोश्चरणयोः - शम्भोश्चरणौ भजे इत्यर्थः। अत्र कर्मत्वाविवक्षायां शेषषष्ठी।

७. फलानां तृप्तः - फलैः तृप्तः इत्यर्थः। अत्र करणत्वविवक्षायां सम्बन्ध मात्र - विवक्षायां फलशब्दात् षष्ठी।

**रूपलेखनप्रकारः -**

**राजः पुरुषः** - अत्र स्वस्वामिभावरूपसम्बन्धे ''षष्ठी शेषे'' इति सूत्रेण राजन्शब्दात् षष्ठीविभक्तौ राज्ञः पुरुषः इति रूपम्

**उदाहरणानि अभ्यासार्थम् -**

दशरथस्य पुत्रः। मम गृहम्। सज्जनां वचनम्। गुरोः आश्रमः इत्यादीनि।

२३. **कर्तृकर्मणोः कृति ॥२।३।६५॥**

कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्।

२४. **आधारोऽधिकरणम् ।१।४।४५।**

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकम् अधिकरणसंज्ञः स्यात्।

२५. **सप्तम्यधिकरणे च ॥२।३।३६॥**

अधिकरणे सप्तमी स्यात्। चकाराद् दूरान्तिकार्थेभ्यः। औपश्लेषिको, वैषयिकोऽभिव्यापकश्चेत्याार-स्त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्वस्मिन्नात्माऽस्ति। वनस्य दूरे अन्तिके वा। ''दूरान्तिकार्थेभ्यः'' इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः।

---

२३. **पदच्छेदः कर्तृ - कर्मणोः कृति।**

**सूत्रविश्लेषणम् -**

कृत्प्रत्यययोगे (कृदन्तशब्देन सह योगे) अनुक्ते कर्तरि कर्मणि च षष्ठी स्यात्। कृत्प्रत्ययः यस्मिन् अर्थे कृतः, सः अर्थः उक्तः, अन्यार्थः अनुक्तः। यदि कृत्प्रत्ययेन कर्ता उक्तः, तत्र सकर्मकधातोः कर्म अनुक्तं भवति, तत्र अनुक्ते कर्मणि षष्ठी। यत्र कृत्प्रत्ययेन कर्म उक्तम्, तत्र कर्ता अनुक्तः, अतः कर्तृवाचकात् शब्दात् षष्ठी इति ज्ञेयम्। यत्र कृत्प्रत्ययेन भावः उक्तः तत्र कर्तृकर्मणी उभे अपि अनुक्ते भवतः।

**उदाहरणविश्लेषणम् -**

१. 'कृष्णस्य कृतिः' इति वाक्ये कृतिरिति कृत्प्रत्ययान्तः, तद्योगे अनुक्त कर्तृवाचके कृष्णशब्दे षष्ठी।
२. 'जगतः कर्ता कृष्णः' अत्र कर्ता इति कृत्प्रत्ययान्तः। तद्योगे अनुक्त कर्मवाचके जगच्छब्दे षष्ठी।

**रूपलेखनप्रकारः**

१. ''कृष्णस्य कृतिः'' अत्र कृतिरिति कृत्प्रत्ययान्तः। तस्य योगे ''कर्तृ-कर्मणोः कृति ''इति सूत्रेण कर्तृवाचके कृष्णशब्दे षष्ठीविभक्तौ कृष्णस्य कृतिरिति रूपम्। एवमन्यत्र।

**अन्योदाहरणानि -**

छात्रस्य कृतिः। सृष्टेः विधाता ब्रह्मा। तव गमनम्। मम पाठः। गवां दोहः। गीतायाः वाचनम्।

२४. **पदच्छेदः - आधारः, अधिकरणम्।**

**सूत्रविश्लेषणम् -**

आद्ध्रियते अस्मिन् इत्याधारः। कर्तुराधारः कर्मणश्च आधारः क्रियाधारः भवति। अतः कर्तृकर्मद्वारा कर्तृकर्मनिष्ठक्रियायाः आधारः कारकम् अधि करणसंज्ञं भवति। क्रियाद्विधा - फलात्मिका व्यापारात्मिका च। फलात्मिकायाः आधारः कर्म, व्यापारात्मिकायाश्च आधारः कर्ता। अतः क्रियायाः साक्षात् आधारस्तु कर्तृसंज्ञः कर्मसंज्ञश्च भवति। किन्तु कर्तृकर्मणोः आधारः अत्र परम्परया क्रियायाः अपि आधारः भवति। अत उक्तं ''कर्तृकर्मद्वारा.'' इति।

२५. **सप्तम्यधिकरणे चेति - पदच्छेदः - सप्तमी, अधिकरणे च।**

**सूत्रविश्लेषणम् -**

अनुक्ते अधिकरणकारके सप्तमीविभक्तिर्भवति। चकाराद् दूरार्थेभ्यः समीपार्थकेभ्यश्च शब्देभ्यः अपि सप्तमी भवति। आधारस्त्रिविधो भवति

१. औपश्लेषिकः २. वैषयिकः ३. अभिव्यापकश्च। तत्र -

१. औपश्लेषिकः संयोगादिसम्बन्धः। कटे आस्ते। स्थाल्यां पचति।

२. वैषायिकः - विषयतासम्बन्धः। मोक्षे इच्छा अस्ति।

३. अभिव्यापकः - आधेयेन सह व्यापकः सम्बन्धः। सर्वस्मिन् आत्मा

२६. **षष्ठी चानादरे ॥२।३।३१।**

अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्त:। रुदति रुदतो वा प्राव्राजीत् रुदन्तं पुत्रादिकम् अनादृत्य संन्यस्तवानित्यर्थ:।

२७. **यतश्च निर्धारणम् - ॥२।३।४१।**

जातिगुणक्रियासंज्ञाभि: समुदायादेकदेशस्य पृथक्करणं निर्धारणं, यतस्तत: षष्ठीसप्तम्यौ स्त:। नृणां नृषु वा द्विज: श्रेष्ठ:। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावञ्छीघ्र:। छात्राणां छात्रेषु वा मैत्र: पटु:। **इति कारकप्रकरणम्**

---

अस्ति। चकाराद् दूरार्थवाचकात् अन्तिकार्थवाचकादपि सप्तमी विधीयते। वनस्य दूरे समीपे वा।

**उदाहरणविश्लेषणम्**

१. कटे अस्ति - संयोगसम्बन्ध:। कर्तृद्वारा आसनक्रियाया: आधारस्य कटस्य अधिकरणसंज्ञायां तत्र कटे सप्तमी।

२. स्थाल्यां पचति - अत्रापि पूर्ववदेव।

३. मोक्षे इच्छास्ति - विषयतासम्बन्ध:। मोक्षे सप्तमी। मोक्षविषयकेच्छा इत्यर्थ:।

४. सर्वस्मिन् आत्मा अस्ति- आधेयेन सह व्यापक: सम्बन्ध:। सर्व-शब्दे सप्तमी।

५. वनस्य दूरे अन्तिके वा- अत्र 'दूर' शब्दात् अन्तिकशब्दाच्च सप्तमी।

**रूपलेखनप्रकार: -**

१. 'कटे आस्ते' अत्र कर्तु: कटस्य च संयोगसम्बन्ध:। कर्तृनिष्ठा या आसनक्रिया तस्या: अपि कट: कर्तृद्वारक: आधार एव। अत: कर्तृद्वारा क्रियाधारस्य कटस्य ''आधारोऽधिकरणम्'' इति सूत्रेण अधिकरणसंज्ञायां कृतायां ''सप्तम्यधिकरणे च'' इति सूत्रेण तत्र सप्तमीविभक्तौ ''कटे आस्ते'' इति वाक्यं साधु।

२६. **पदच्छेद: - षष्ठी, च, अनादरे।**

**सूत्रविश्लेषणम् -**

अनादरे गम्यमाने सति यया क्रियया क्रियान्तरं लक्ष्यते, तस्मात् लक्षकक्रिया वाचकात् षष्ठी, सप्तमी च भवत:।

**उदाहरणविश्लेषणम् -**

**रुदति रुदतो वा प्राव्राजीत्** - कदा प्राव्राजीत् ? इति प्रश्ने उत्तरमिदम्। रुदन्तं पुत्रम् अनादृत्य संन्यासं गृहीतवान् इत्यर्थ:। अत्र पुत्रस्य रोदनक्रियया पितु: प्रव्रजनक्रिया लक्ष्यते। पुत्रेण कृतेऽपि रोदने स प्रव्रजनात् न निवृत्त:, इत्थं तेन पुत्रस्य अनादर: अपि गम्यते। अत: तत्र पुत्रस्य रोदनक्रियावाचकात् 'रुदत्' इति प्रतिपदिकात् षष्ठी सप्तमी च विभक्ति: विधीयते, रुदत:, रुदति इति। 'रुदत्' इति शतृप्रत्ययान्तम्।

**रूपलेखनप्रकार: -**

'रुदति रुदतो वा प्राव्राजीत्' इत्यत्र अनादरस्य गम्यमानत्वात् भावलक्षणात् 'रुदत्' इति प्रातिपदिकात् ''षष्ठी चानादरे'' इति सूत्रेण सप्तमीविभक्तौ 'रुदति' इति, षष्ठ्यां विभक्तौ तु 'रुदत:' इत्येवं रूपात् वाक्यमिदं सिद्धम्।

**अन्यानि उदाहरणानि -**

अनुनयत: अनुनयति वा गत:। याचमानस्य याचमाने वा गत: धनी। निवेदयत: निवेदयति वा न स्वीकृतवान् इत्यादीनि।

२७. **पदच्छेद: यत:, च, निर्धारणम्।**

**सूत्रविश्लेषणम् -**

जातिगुणक्रियासंज्ञाभि: यस्मात् समुदायाद् एकदेश: पृथक्क्रियते तस्मात् समुदायवाचकशब्दात् षष्ठी सप्तमी च भवत:।

**उदाहरणविश्लेषणम् –**

१. नृणां नृषु वा द्विजः श्रेष्ठः – नृशब्दः मनुष्यसमुदायवाचकः, तस्माद् द्विजजातिः पृथक् क्रियते, अतः नृशब्दात् षष्ठी सप्तमी च भवतः।

२. गवां गोषु वा कृष्णा बहुक्षीरा – गोशब्दः पशुविशेषजातिसमुदायवाचकः। तस्मात् गुणाधारेण 'कृष्णा' इति (बहुक्षीरवत्त्वात्) इत्येकदेशः पृथक् क्रियते। अतः गोशब्दात् षष्ठी–सप्तम्यौ।

३. गच्छतां गच्छत्सु वा धावञ्छीघ्रः – गच्छतां समुदायात् धावत्क्रियाविशिष्टस्य पृथक्करणं भवति, अतो गच्छत् इति शब्दात् षष्ठी सप्तमी च।

४. छात्राणां छात्रेषु वा मैत्रः पटुः – छात्रसमुदायाद् एकदेशस्य मैत्रनामकछात्रस्य पृथक्करणं भवति, तस्मात् छात्रशब्दात् षष्ठीसप्तम्यौ स्तः।

**रूपलेखनप्रकारः**

१. **'नृणां नृषु वा द्विजः श्रेष्ठः'** अत्र मनुष्यसमुदायवाचकात्

नृशब्दात् द्विजः (जातिरूपः एकदेशः) जात्या पृथक् क्रियते अतः ''यतश्च निर्धारणम्'' इति सूत्रेण नृशब्दात् षष्ठीविभक्तौ सप्तमीविभक्तौ च नृणां नृषु वा द्विजः श्रेष्ठः। एवम् अन्यत्र अपि।

**अन्योदाहरणानि अभ्यासार्थम्**

मृगाणां मृगेषु वा गौः श्रेष्ठा।
नारीणां नारीषु वा पतिव्रता कुलीना।
धावतां धावत्सु वा गच्छन् मन्दः।
दाशरथीनां दाशरथिषु रामो ज्येष्ठः।

## इति कारकप्रकरणं समाप्तम्

## अभ्यासार्थ प्रश्नाः

### वस्तुनिष्ठ प्रश्नाः –

१. प्रातिपदिकार्थमात्रे विभक्तिः स्यात्।
(क) प्रथमा (ख) द्वितीया
(ग) तृतीया (घ) सप्तमी ( )

२. कर्तुः क्रियया आप्तुम् इष्टतमं कारकं स्यात्।
(क) अधिकरणसंज्ञम् (ख) करणसंज्ञम्
(ग) अपादानसंज्ञम् (घ) कर्मसंज्ञम् ( )

३. द्वितीयाविभक्तिः स्यात्
(क) उक्ते कर्मणि (ख) अनुक्ते कर्तरि
(ग) अपादाने (घ) अनुक्ते कर्मणि ( )

४. अधि–पूर्वाणां शीङ्स्थाऽसाम् आधारो भवति –
(क) कर्ता (ख) कर्म
(ग) करणम् (घ) सम्प्रदानम् ( )

५. ''कालाध्वनोरत्यन्तसंयोगे'' इत्यस्य उदाहरणमस्ति।

(क) गां दोग्धि पयः (ख) मासमधीते

(ग) हरिं भजति (घ) द्रोणो व्रीहिः ( )

६. 'रामेण बाणेन हतो बाली' इत्यत्र अनुक्तं करणमस्ति।

(क) रामेण (ख) बाणेन

(ग) हतः (घ) बाली ( )

७. सहयुक्ते तृतीया विभक्तिः स्यात् -

(क) प्रधाने (ख) अप्रधाने

(ग) प्रधानेऽप्रधाने च (घ) प्रधानाप्रधानरहिते ( )

८. दण्डेन घटः इत्यत्र तृतीया केन सूत्रेण भवति।

(क) येनाङ्गविकारः (ख) हेतौ

(ग) साधकतमं करणम् (घ) इत्थम्भूतलक्षणे ( )

९. 'हरये नमः' इत्यत्र हरिशब्दे विभक्तिरस्ति।

(क) चतुर्थी (ख) सम्बोधनम्

(ग) द्वितीया (घ) प्रथमा ( )

१०.जायमानस्य प्रकृते (हेतोः) संज्ञा भवति -

(क) अधिकरणम् (ख) अपादानम्

(ग) सम्बन्धः (घ) करणम् ( )

११. कृद्योगे कर्तरि कर्मणि च विभिक्तिर्भवति।

(क) प्रथमा (ख) द्वितीया

(ग) षष्ठी (घ) सप्तमी ( )

१२. 'यतश्च निर्धारणम्' इत्यस्योदाहरणमस्ति।

(क) क्रोशं कुटिला नदी (ख) अक्ष्णा काणः

(ग) रुदति रुदतो वा प्राव्राजीत्

(घ) नृणां नृषु वा द्विजः श्रेष्ठः ( )

### लघूत्तरप्रश्नाः -

प्रश्न १ 'कर्मणि द्वितीया' इत्यस्य अर्थो लेख्यः।

प्रश्न २ 'सम्बोधने च' इत्यस्योदाहरणं लेख्यम्।

प्रश्न ३ 'रामेण बाणेन हतो बाली' इत्यत्र अनुक्ते कर्तरि तृतीया केन सूत्रेण भवति।

प्रश्न ४ 'रुदति रुदतो वा प्राव्राजीत्' इत्यत्र षष्ठी-सप्तमी-विधायकं सूत्रं लिखत।

प्रश्न ५ निम्नाङ्कितानां ससूत्रं सिद्धिर्विधेया।

१. हरिं भजति।

२. जटाभिस्तापसः।

३. धावतोऽश्वात् पतति।

४. जगतः कर्ता कृष्णः।

५. गच्छतां गच्छत्सु वा धावञ्छीघ्रः।

### *निवेदनम्*

स्खलनं सम्भवं लेखे येन केनापि हेतुना।
आद्यां प्रवृत्तिमेतां नः समादधतु सज्जनाः।।






भवतः नाम किम् ?







एतस्य उत्तरं लिखतु -

**भवतः नाम किम् ?**

**भवत्याः नाम किम् ?**



बालकः



१. एषः बालकः।



१. सः वृद्धः।

वृद्धः



गणेशः

२. ..................



२. ..................

गोविन्दः



आरक्षकः

३. ..................



३. ..................

सैनिकः



सीता



१. एषा सीता।



१. सा सन्ध्या।

सन्ध्या



बालिका

२. ..................



२. ..................

वृद्धा



नलिनी

३. ..................



३. ..................

सावित्री



पुस्तकम्





गृहम्

| | |
|---|---|
| १. एतत् पुस्तकम् | १. तत् गृहम्। |
| २. .................. | २. .................. |
| ३. .................. | ३. .................. |
| ४. .................. | ४. .................. |



छत्रम्



फलम्



पुष्पम्



कृष्णफलकम्



उपनेत्रम्



दूरदर्शनम्

| | | |
|---|---|---|
| एषः | - | सः |
| एषा | - | सा |
| एतत् | - | तत् |

क :
का
किम्
?



उदाहरणं दृष्ट्वा वाक्यानि लिखतु -

१. सा बालिका वा ? आम्, सा बालिका

२. —— बालकः वा ? — — — — —

३. —— द्वारं —— ? — — — — —

४. —— सैनिकः —— ? — — — — —

५. —— युवतिः —— ? — — — — —

६. —— चित्रं —— ? — — — — —

| | | | | |
|---|---|---|---|---|
| निर्मला | बालिका | ✓ | युवतिः | ✗ |
| रोहिणी | वैद्या | ✗ | विद्यार्थिनी | ✓ |
| महेशः | विद्यार्थी | ✓ | वैद्यः | ✗ |
| अनन्तः | शिक्षकः | ✓ | लिपिकारः | ✗ |
| देवदत्तः | न्यायवादी | ✗ | उट्टङ्ककः | ✓ |
| नागराजः | चित्रकारः | ✗ | आरक्षकः | ✓ |

एतस्य कोष्ठकस्य साहाय्येन वाक्यानि लिखतु -

१. निर्मला बालिका वा ? आम्, निर्मला बालिका। सा युवतिः न।

२. रोहिणी वैद्या वा ? न, रोहिणी वैद्या न। सा विद्यार्थिनी।

३. — — — — — — — ? — — — — — — — । — — — — — — — ।

४. — — — — — — — ? — — — — — — — । — — — — — — — ।

५. — — — — — — — ? — — — — — — — । — — — — — — — ।

६. — — — — — — — ? — — — — — — — । — — — — — — — ।

| रामः | सीता | पुस्तकम् |
|---|---|---|
| ग्रन्थः | घटी | पुष्पम् |
| श्लोकः | बालिका | वस्त्रम् |
| दर्पणः | लता | गृहम् |
| दण्डदीपः | सञ्चिका | चित्रम् |
| गजः | लेखनी | पत्रम् |

**रिक्तस्थलानि सः/सा/तत् एतेषु उचितरूपेण पूरयतु –**

पुँल्लिङ्गशब्दतः पूर्वं **'सः'** इत्येव लेखनीयम्।
स्त्रीलिङ्गशब्दतः पूर्वं **'सा'** इत्येव लेखनीयम्।
नपुंसकलिङ्गशब्दतः पूर्वं **'तत्'** इत्येव लेखनीयम्।

| | | |
|---|---|---|
| १. सः रामः। | २. सा सीता। | ३. तत् पुस्तकम्। |
| ४. ________। | ५. ________। | ६. ________। |
| ७. ________। | ८. ________। | ९. ________। |
| १०. ________। | ११. ________। | १२. ________। |
| १३. ________। | १४. ________। | १५. ________। |

**रिक्तस्थलानि एषः/एषा/एतत्**
**कः/का/किम् ? एतेषु उचितरूपेण पूरयतु –**

| | | |
|---|---|---|
| १. कः राम ? | २. का सीता। | ३. किं पुस्तकम्। |
| ४. ________। | ५. ________। | ६. ________। |
| ७. ________। | ८. ________। | ९. ________। |
| १०. ________? | ११. ________? | १२. ________? |
| १३. ________। | १४. ________। | १५. ________। |
| १६. ________? | १७. ________? | १८. ________? |

| | | | |
|---|---|---|---|
| पुष्पाधानी | दूरवाणी | दर्पणः | पादत्राणम् |
| पादशोधकम् | मञ्चः | कङ्कतम् | जवनिका |
| मानपेटिका | निधानिका | दण्डदीपः | द्विचक्रिका |
| करदीपः | मण्डपः | भावचित्रम् | सीवनयन्त्रम् |
| सम्मार्जनी | पाञ्चालिका | मापनदण्डः | उपनेत्रम् |
| कर्तरी | माला | क्षुरपत्रम् | वातायनम् |



**चित्रं दृष्ट्वा 'अस्ति' अथवा 'नास्ति' इति लिखतु -**

| | |
|---|---|
| पुस्तकम् अस्ति। | दण्डदीपः नास्ति। |
| घटी ———। | पुष्पं ————। |
| उपनेत्रम् ———। | आकाशवाणी ————। |
| लेखनी ———। | पेटिका ————। |
| पत्रिका ———। | फलम् ————। |

**उदाहरणं दृष्ट्वा चित्रस्य अधः रिक्तं स्थानं पूरयतु -**



सस्यम् अत्र अस्ति। वृक्षः तत्र अस्ति।



कार्यानं .......... अस्ति। देवालयः ........ अस्ति।

वायुः सर्वत्र अस्ति।

देवः ............. अस्ति।

मम मित्रम् अन्यत्र अस्ति।

तस्य गृहम् .............. अस्ति।

**सर्वत्र**

**अन्यत्र**

| | | |
|---|---|---|
| पुस्तकम्<br>गृहम् | अत्र<br>तत्र<br>कुत्र<br>सर्वत्र<br>अन्यत्र<br>एकत्र | अस्ति<br>नास्ति |

**एतस्य कोष्ठकस्य आधारेण वाक्यानि लिखतु -**

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

— — — — — — — — — — — — — — — — — — — —

उदाहरणं दृष्ट्वा तादृशवाक्यानि लिखतु -



| | | |
|---|---|---|
| रामः | १. एतस्य नाम रामः। १. तस्य नाम कृष्णः। | कृष्णः |
| गणेशः | २. ........................। २. ........................। | आञ्जनेयः |
| शिवः | ३. ........................। ........................। | राघवेन्द्रः |
| रामायणम् | ४. ........................। ४. ........................। | महाभारतम् |
| लक्ष्मीः | १. एतस्याः नाम लक्ष्मीः। १. तस्याः नाम सरस्वती। | सरस्वती |
| उमा | २. ........................। २. ........................। | गीता |
| लीला | ३. ........................। ३. ........................। | रमा |
| गायत्री | ४. ........................। ४. ........................। | भारती |

**आवरणे विद्यमानस्य पदस्य उचितं रूपं रिक्ते स्थले लिखतु।**

अ. उदा – (सरयूनदी) सरयूनद्याः तीरे अयोध्या अस्ति।

(अयोध्या) ........................................................................ राजा दशरथः।

(दशरथः) ........................................................................ चत्वारः पुत्राः।

(प्रथमः) ............................................................................... नाम रामः।

(द्वितीयः) ........................................................................ नाम भरतः।

(तृतीयः) ................................ (चतुर्थः) ..................................... च नाम लक्ष्मणः शत्रुघ्नः च।

रामः (कौसल्या) ...................................................................... पुत्रः।

भरतः (कैकेयी) ........................................................................ पुत्रः।

(लक्ष्मणः) ........................................... (शत्रुघ्नः) ....................................... च माता सुमित्रा।

रामः (रावणः) ...................................(कुम्भकर्णः) .................................. च वधं कृतवान्।

आ. (मथुरा).......................... राजा अग्रसेनः।

(उग्रसेनः) ...................... पुत्रः कंसः।

(कंसः)............................ भगिनी देवकी।

(देवकी) ............................. पतिः वसुदेवः, पुत्रः कृष्णः।

कृष्णः (नन्दगोपः) ............. (यशोदा)............. च पालितपुत्रः अपि।

(कुन्ती) .................................... पुत्रः अर्जुनः।

सः अर्जुनः (कृष्णः) ......... (भगिनी) ...........(सुभद्रा) ........पतिः।

(सुभद्रा) ....................................... पुत्रः अभिमन्युः।

अभिमन्युः (उत्तरा) ......................... पतिः।

उत्तरा (विराटराजः) .................................. पुत्री।




| | | |
|---|---|---|
| १. सा गच्छति। | २. सः आगच्छति। | ३. सः पठति। |
| ४. सः लिखति। | ५. सः क्रीडति। | ६. सः पिबति। |
| ७. सः खादति। | ८. सा पश्यति। | ९. सः हसति। |
| १०. सः नयति। | | |

एवमेव एषः, एषा, एतत्, सः,सा, तत्, भवान्, भवती - एतैः शब्दैः सह क्रियापदानाम् अभ्यासं करोतु। यथा - एषः गच्छति, एषा गच्छति ...........।




उदहारणं दृष्ट्वा उपरितन-क्रियापदानि परिवर्तयतु -

उदा०- **गच्छति** -

| | |
|---|---|
| १) अहं गच्छामि। | २) .....................। |
| ३) .....................। | ४) .....................। |
| ५) .....................। | ६) .....................। |
| ७) .....................। | ८) .....................। |
| ९) .....................। | १०) .....................। |

**एतत् सम्भाषणं पठतु -**



सेवकः - भोः, किम् **आवश्यकम्** ?

ग्राहकः - काफी **आश्यकम्।**

सेवकः - जलम् **आवश्यकं** वा ?

ग्राहकः - मास्तु। काफी **आवश्यकम्।**

सेवकः - स्वीकरोतु।

ग्राहकः - किञ्चित् शर्करा ......।

सेवकः - स्वीकरोतु। पुनः **आवश्यकं वा?**

ग्राहकः - पर्याप्तम्। पुनः **मास्तु।**

**आवश्यकम्     मास्तु**

**पर्याप्तम्**

अभ्यासः-

**एतत् चित्रं पश्यतु। तस्य चित्रस्य आधारेण एक सम्भाषणं लिखतु -**



ग्राहिका ————————————।

विक्रेता ————————————।

ग्राहिका ————————————।

विक्रेता ————————————।

ग्राहिका ————————————।

विक्रेता ————————————।

ग्राहिका ————————————।

विक्रेता ————————————।

ग्राहिका ————————————।





**एतेषां क्रियापदानां प्रार्थनारूपाणि/आज्ञारूपाणि लिखतु –**

**यथा** – गच्छति – गच्छतु।      आगच्छति .................................................।

पठति .................................................।      लिखति .................................................।

क्रीडति .................................................।      पिबति .................................................।

खादति.................................................।      नयति .................................................।

हसति .................................................।      पश्यति .................................................।

मिलति .................................................।      तिष्ठति .................................................।

करोति .................................................।      भवति .................................................।

**एषः, एषा, सः, एतत्, तत्, भवान्, भवती – एतैः सह एतेषाम् उपयोगं करोतु।**

**यथा** – एषः गच्छतु।      एषा पठतु।

.................................. लिखतु।      तत् .........................................।

......................................खादतु।      ................................................।

................................................।      ................................................।

................................................।      ................................................।

## सङ्ख्याः




१. एकम्
२. द्वे
३. त्रीणि
४. चत्वारि
५. पञ्च
६. षट्
७. सप्त
८. अष्ट
९. नव
१०. दश

११. एकादश
१२. द्वादश
१३. त्रयोदश
१४. चतुर्दश
१५. पञ्चदश
१६. षोडश
१७. सप्तदश
१८. अष्टादश
१९. नवदश
२०. विंशतिः

२१. एकविंशतिः
२२. द्वाविंशतिः
२३. त्रयोविंशतिः
२४. चतुर्विंशतिः
२५. पञ्चविंशतिः
२६. षड्विंशति
२७. सप्तविंशतिः
२८. अष्टाविंशतिः
२९. नवविंशतिः
३०. त्रिंशत्

३१. एकत्रिंशत्
३२. द्वात्रिंशत्
३३. त्रयस्त्रिंशत्
३४. चतुस्त्रिंशत्
३५. पञ्चत्रिंशत्
३६. षट्त्रिंशत्
३७. सप्तत्रिंशत्
३८. अष्टात्रिंशत्
३९. नवत्रिंशत्
४०. चत्वारिंशत्

४१. एकचत्वारिंशत्
४२. द्विचत्वारिंशत्
४३. त्रिचत्वारिंशत्
४४. चतुश्चत्वारिंशत्
४५. पञ्चचत्वारिंशत्
४६. षट्चत्वारिंशत्
४७. सप्तचत्वारिंशत्
४८. अष्टचत्वारिंशत्
४९. नवचत्वारिंशत्
५०. पञ्चाशत्

५१. एकपञ्चाशत्
५२. द्विपञ्चाशत्
५३. त्रिपञ्चाशत्
५४. चतुष्पञ्चाशत्
५५. पञ्चपञ्चाशत्
५६. षट्पञ्चाशत्
५७. सप्तपञ्चाशत्
५८. अष्टपञ्चाशत्
४९. नवपञ्चाशत्
६०. षष्टिः

| | | | |
|---|---|---|---|
| ६१. एकषष्टिः | ७१. एकसप्ततिः | ८१. एकाशीतिः | ९१. एकनवतिः |
| ६२. द्विषष्टिः | ७२. द्विसप्ततिः | ८२. द्व्यशीतिः | ९२. द्विनवतिः |
| ६३. त्रिषष्टिः | ७३. त्रिसप्ततिः | ८३. त्र्यशीतिः | ९३. त्रिनवतिः |
| ६४. चतुःषष्टिः | ७४. चतुस्सप्ततिः | ८४. चतुरशीतिः | ९४. चतुर्नवतिः |
| ६५. पञ्चषष्टिः | ७५. पञ्चसप्ततिः | ८५. पञ्चाशीतिः | ९५. पञ्चनवतिः |
| ६६. षट्षष्टिः | ७६. षट्सप्ततिः | ८६. षडशीतिः | ९६. षण्णवतिः |
| ६७. सप्तषष्टिः | ७७. सप्तसप्ततिः | ८७. सप्ताशीतिः | ९७. सप्तनवतिः |
| ६८. अष्टषष्टिः | ७८. अष्टसप्ततिः | ८८. अष्टाशीतिः | ९८. अष्टनवतिः |
| ६९. नवषष्टिः | ७९. नवसप्ततिः | ८९. नवाशीतिः | ९९. नवनवतिः |
| ७०. सप्ततिः | ८०. अशीतिः | ९०. नवतिः | १००.शतम् |

अधः एकं चित्रम् अस्ति। तत्र क्रमेण सङ्ख्याः योजयित्वा कः प्राणी अस्ति इति जानातु -





पञ्चवादनम्




सपादषड्वादनम्



सार्धसप्तवादनम्



पादोन-नववादनम्



दशाधिक-नववादनम्



पञ्च-न्यूनदशवादनम्

समयम् अक्षरैः लिखतु -

**यथा - ८.१५ सपाद-अष्टवादनम्।**    **१०.३५** ......................

**१.१०** ..........................।    **१२.४०** ......................

**११.२०** .........................।    **१०.४५** ......................

**घट्यां समयं दर्शयतु -**

यथा - **६.०५**    **५.४५**    **१२.२५**







यथा - **३.५०**    **९.३०**    **४.१०**







विशेषसूचना -

| | | |
|---|---|---|
| १.०० = एकं वादनम् | ✗ | एकवादनम् ✓ |
| २.०० = द्वे वादनम् | ✗ | द्विवादनम् ✓ |
| ३.०० = त्रीणि वादनम् | ✗ | त्रिवादनम् ✓ |
| ४.०० = चत्वारि वादनम् | ✗ | चतुर्वादनम् ✓ |

# पाकशालासम्बन्धीनि वस्तूनि

| | | | |
|---|---|---|---|
| चषकः | चमसः | घटः | मन्थानः |
| करण्डकः | घरट्टः | पिष्टपचनम् | चुल्लिः |
| स्थालिका | छुरिका | अग्निपेटिका | सिक्थवर्तिका |
| आधानिका | अनिलचुल्लिः | द्रोणी | पात्रम् |
| दर्वी | वाष्पस्थाली | चालनी | सन्दंशः |
| कूपी | वेल्लनी | चषकाधानी | ईली |

## बहुवचनम्

**अ) रिक्तेषु स्थलेषु बहुवचनरूपाणि लिखतु -**

| एकवचनम् | बहुवचनम् | एकवचनम् | बहुवचनम् |
|---|---|---|---|
| बालकः | बालकाः (पु०) | फलम् | फलानि (न.) |
| शिक्षकः | शिक्षकाः | वनम् | वनानि |
| चषकः | ...................... | फेनकम् | .................. |
| घटः | ...................... | गृहम् | .................. |
| चमसः | ...................... | वस्त्रम् | .................. |
| बालिका | बालिकाः (स्त्री.) | लेखनी | लेखन्यः(स्त्री.) |
| छुरिका | छुरिकाः | अङ्कनी | अङ्कन्यः |
| स्थालिका | ...................... | सम्मार्जनी | .................. |
| अग्निपेटिका | ...................... | द्रोणी | .................. |
| सिक्थवर्तिका | ...................... | कूपी | .................. |

| | | | | | |
|---|---|---|---|---|---|
| **सः** | **ते** | **एषः** | **एते** | **कः** | **के** |
| **सा** | **ताः** | **एषा** | **एताः** | **का** | **काः** |
| **तत्** | **तानि** | **एतत्** | **एतानि** | **किम्** | **कानि** |

**आ) उपरितनकोष्ठकस्य साहाय्येन रिक्तस्थलानि पूरयतु।**

| | | | | |
|---|---|---|---|---|
| उदा - | एते | बालकाः। | एताः | द्रोण्यः। |
| | .......... | चषकाः। | .......... | अग्निपेटिकाः। |
| | .......... | पुस्तकानि। | .......... | घटाः। |
| | .......... | स्थालिकाः। | .......... | सम्मार्जन्यः। |
| | .......... | वाष्पस्थाल्यः ? | .......... | वस्त्राणि ? |

**इ) बहुवचनरूपाणि लिखतु -**

| | | | | |
|---|---|---|---|---|
| उदा - | एषः जनः। | एते जनाः। | कः जनः ? | ..................? |
| | एषा महिला। | ....................। | सा स्थालिका | ..................। |
| | तत् उपनेत्रम्। | ....................। | सः चमसः | ..................। |
| | किं फलम् ? | ....................? | का भगिनी ? | ..................? |
| | एतत् गृहम् | ....................। | एषः सैनिकः | ..................। |

| ई) एकवचनम् | बहुवचनम् | | | | |
|---|---|---|---|---|---|
| भवान् | भवन्तः | .................. | बालिका | .......................... | बालिकाः |
| भवती | भवत्यः | ........................ | युवकः | ............................. | युवकाः |
| अहम् | वयम् | .......................... | महिला | ............................. | महिलाः |

भवान् बालकः भवन्तः बालकाः

**उ) प्रयोगपरिवर्तनं करोतु -**

| | | |
|---|---|---|
| यथा - | १) भवान् बालकः। | अहं बालकः। |
| | २) भवती अध्यापिका। | ..................................................................................। |
| | ३) भवन्तः शिक्षकाः। | वयं शिक्षकाः। |
| | ४) भवत्यः विद्यार्थिन्यः। | ..................................................................................। |

**ऊ) प्रश्नान् लिखतु -**

| | | |
|---|---|---|
| यथा - | एते छात्राः। | एते के ? |
| | एताः स्थालिकाः। | ................................................................................................ ? |
| | वयं सचिवाः। | ................................................................................................ ? |
| | एतानि चित्राणि। | ................................................................................................ ? |
| | ताः पत्रिकाः। | ................................................................................................ ? |
| | वयं शिक्षिकाः। | ................................................................................................ ? |
| | ते वैद्याः। | ................................................................................................ ? |

# क्रियापदानि (ब.व.)

**अ) अधोरेखाङ्कितस्य केवलं वचनपरिवर्तनं करोतु -**

| | | |
|---|---|---|
| यथा - | स: विद्यालये पठति। | ते विद्यालये पठन्ति। |
| | सा गृहे वसति। | ..........................................। |
| | एष: कार्यालये तिष्ठति। | ..........................................। |
| | लतायां पुष्पं विकसति। | ..........................................। |
| | भवान् क्रीडाङ्गणे क्रीडति। | ..........................................। |
| | भवती प्रतिदिनं नृत्यति। | ..........................................। |
| | वने सिंह: गर्जति। | ..........................................। |
| | एषा चित्रं पश्यति। | ..........................................। |
| | बाल: शालां गच्छति। | ..........................................। |
| | वानर: फलं खादति। | ..........................................। |

**आ) बहुवचनरूपाणि लिखतु -**

| | | |
|---|---|---|
| यथा - | भवान् पठतु। | भवन्त: पठन्तु। |
| | भवती लिखतु। | ..........................................। |
| | अम्बा गच्छतु। | ..........................................। |
| | अनुज: क्रीडतु। | ..........................................। |
| | बालिका नृत्यतु। | ..........................................। |
| | एष: तिष्ठतु। | ..........................................। |

**इ) बहुवचनरूपाणि लिखतु -**

| | | |
|---|---|---|
| यथा - | अहं खादामि। | वयं खादाम:। |
| | अहं हसामि। | ..........................................। |
| | अहम् इच्छामि। | ..........................................। |
| | अहं पिबामि। | ..........................................। |

## विशेषाभ्यासः

| | |
|---|---|
| करोति – कुर्वन्ति | करोमि – कुर्मः |
| शृणोति – शृण्वन्ति | शृणोमि – शृणुमः |
| ददाति – ददति | ददामि – दद्मः |
| जानाति – जानन्ति | जानामि – जानीमः |
| शक्नोति – शक्नुवन्ति | शक्नोमि – शक्नुमः |

**एतेषाम् उपयोगं कृत्वा वाक्यानि लिखन्तु –**

**१) कर्मकराः कार्यं कुर्वन्ति।** २) ..................................।

३) ..................................। ४) ..................................।

५) ..................................। ६) ..................................।

७) ..................................। ८) ..................................।

९) ..................................। १०) ..................................।

**उदाहरणं दृष्ट्वा तादृशानि वाक्यानि लिखतु –**

**कति ?**



**षट् फलानि सन्ति।**

**कति फलानि सन्ति ?**

**अष्ट पर्णानि सन्ति।**

.................................. ?

**षट् वातायनानि सन्ति।**

.................................. ?

............... **अङ्कन्यः सन्ति।**

.................................. ?

.............. **कुञ्चिकाः** .............।

.................................. ?

**वि.सू. – कति अस्ति। ✗**
**कति सन्ति। ✓**

**अत्र प्रश्नस्य एकम् उत्तरं लिखितम् अस्ति। आवरणे विद्यमानस्य पदस्य साहाय्येन पुनः त्रीणि उत्तराणि लिखतु -**



कुत्र पुस्तकम् अस्ति ?

(स्यूतः) - स्यूते पुस्तकम् अस्ति।

(ग्रन्थालयः) ..............................................।

(आपणः) .................................................।

(हस्तः) ....................................................।



कुत्र बालकः अस्ति ?

(गृहम्) - गृहे बालकः अस्ति।

(नगरम्) ...................................................।

(चित्रमन्दिरम्) ...........................................।

(उपाहारगृहम्) ...........................................।



कुत्र पाञ्चालिका अस्ति ?

(उत्पीठिका) - उत्पीठिकायां पाञ्चालिका अस्ति।

(कपाटिका) ..............................................।

(पेटिका) .................................................।

(निधानिका) .............................................।



कुत्र मन्दिरम् अस्ति ?

(काशी) - काश्यां विश्वनाथमन्दिरम् अस्ति।

(उज्जयिनी) ............... महाकाल ...............।

(पुरी) ................... जगन्नाथ ....................।

(कन्याकुमारी) ...........कन्याकुमारी .............।

| मम | पिता<br><br>सहोदरः | कार्यालयः<br>वित्तकोषः<br>यन्त्रागारम्<br>दूरवाणीविनिमयकेन्द्रम्<br>स्वायत्तसंस्था | कार्यं करोति |
|---|---|---|---|

**एतस्य कोष्ठकस्य आधारेण १० वाक्यानि लिखतु -**

यथा - १. मम पिता कार्यालये कार्यं करोति।

२. ..........................................।

३. ..........................................।

४. ..........................................।

५. ..........................................।

६. ..........................................।

७. ..........................................।

८. ..........................................।

९. ..........................................।

१०. ..........................................।

**एतं पदबन्धम् उचितपदैः पूरयतु -**

| | | | | | |
|---|---|---|---|---|---|
| यथा - चालकः अत्र अस्ति। → | लो | क | या | ने | |
| भवतः माता कुत्र अस्ति ? → | गृ | | | | |
| नागरिकाः अत्र वसन्ति। → | | | रे | | |
| अत्र कार्याणि कुर्वन्ति। → | | र्या | | | |
| भवान् कुत्र पठति ? → | वि | | | ये | |
| धनम् अत्र रक्षामः। → | | त्त | को | | |
| चलनचित्रम् अत्र पश्यतु। → | | त्र | मं | | |
| मशी कुत्र अस्ति ? → | | ख | | | |



जलपूरणम् अत्रं

स्वमुखम् अत्र पश्यामः।

रामस्य कथा अत्र अस्ति।

पुस्तकस्थापनम् अत्र।

भगवतः कृष्णस्य कथाः अत्र सन्ति।

अत्र विहारं कुर्मः।

अत्र उपविशामः।

## कदा-?

**अ ) एतेषाम् प्रश्नानाम् उत्तरं लिखतु -**

यथा - भवान् कदा उत्तिष्ठति ?

अहं पञ्चवादने उत्तिष्ठामि।

भवान् कदा विद्यालयं गच्छति ?

.............................................................................।

सूर्योदयः कदा भवति ?

.............................................................................।

भवती कदा क्रीडति ?

.............................................................................।

भवती कदा पठति ?

.............................................................................।

**आ ) एतेषाम् उत्तराणां प्रश्नं लिखतु -**

सीता सायङ्काले नृत्याभ्यासं करोति।

.............................................................................।

वेङ्कटेशः षड्वादने योगासनं करोति।

.............................................................................।

माता दशवादने पाकं करोति।

.............................................................................।

सा प्रातःकाले पूजां करोति।

.............................................................................।

| प्रपरह्य | ← | परह्य | ← | ह्यः | ← | अद्य | श्वः | परश्वः | प्रपरश्वः |
|---|---|---|---|---|---|---|---|---|---|

**अत्र रिक्तानि स्थलानि पूरयतु -**

अद्य भानुवासरः

........... शनिवासरः

.............. सोमवासरः

............. शुक्रवासरः

............. मुङ्गलवासरः

.........................................................................।

.........................................................................।

.........................................................................।

अद्य मङ्गलवासरः।

श्वः बुधवासरः।

.........................................................................।

.................................................................।

**प्रथमवाक्यं पठित्वा प्रश्नस्य उत्तरं लिखतु -**

यथा - १. अद्य अगस्ट् षोडशदिनाङ्कः।

स्वातन्त्र्यदिनोत्सवः कदा ?

स्वातन्त्र्यदिनोत्सवः ह्यः ?

२. अद्य अक्टोबर् प्रथमदिनाङ्कः।

गान्धीजयन्ती कदा ?

.............................................................................।

३. अद्य जनवरी 24 दिनाङ्कः।

गणराज्योत्सवः कदा ?

.............................................................................।

**एतत् सम्भाषणं पठतु**



''हरिः ओम्, सुप्रभातम्!''

''नमस्ते श्रीमन्! स्वागतम्, आगच्छतु, उपविशतु।''

''धन्यवादः।''

सर्वं कुशलं वा ?''

आम्, कुशलम्। भवान् एतत् पुस्तकं स्वीकरोतु।''

''कथम् अस्ति एतत् पुस्तकम् ?''

''समीचीनम् अस्ति। भवान् अपि पठतु।''

''अस्तु, अनन्तरं पठामि।''

''अहं गच्छामि।''

''तिष्ठतु, पानीयं स्वीकरोतु।''

''क्षम्यताम्, मास्तु।''

'किञ्चित् स्वीकरोतु।''

''अस्तु, धन्यवादः।''

''शर्करा अधिका अस्ति किल!''

'चिन्ता मास्तु। (पिबति)। अहम् गच्छामि नमस्कारः।''

''नमस्कारः।''

**हरिः ओम्, सुप्रभातम्, स्वागतम्,**
**क्षम्यताम्, नमस्कारः, चिन्ता मास्तु**



१. विद्यालयः



२. ग्रन्थालयः



३. धूमशकटस्थानकम्



४. देवालयः



५. चित्रमन्दिरम्



६. कार्यालयः



७. उद्यानम्



८. प्रदर्शिनी



९. आपणः

**चित्रं दृष्ट्वा उदाहरणं दृष्ट्वा तादृशानि वाक्यानि लिखतु -**

यथा - १) मम मित्रं विद्यालयं गच्छति।

२) ..........................................................................................।

३) ..........................................................................................।

४) ..........................................................................................।

५) ..........................................................................................।

६) ..........................................................................................।

७) ..........................................................................................।

८) ..........................................................................................।

९) ..........................................................................................।

**अत्र एकं सम्भाषणम् अस्ति। सम्भाषणं पठतु। आवरणे विद्यमानानां शब्दानाम् उचितरूपाणि रिक्ते स्थले लिखतु –**

पिता – पुत्र! (पाठः) ........................................... पठतु।

पुत्रः – अहं (पाठः) .................................................... पठितुं न शक्नोमि।

पिता – किमर्थम् ?

पुत्रः – अहम् (अर्थः) ................................................. न जानामि।

पिता – किमर्थं न जानाति ?

पुत्रः – शिक्षकः (पाठन) ................................................. न कृतवान्।

पिता – (एकः पाठः) ........................................... अपि न पाठितवान् वा ?

पुत्रः – न, सः (विद्यालयः) ................................................. एव न आगतवान्।

पिता – तर्हि (विद्यालयः) ........................................... गत्वा किं प्रयोजनम् ?

अहम् (अधिकारी) ....................................... प्रति लिखामि। सः (विद्यालयः) .............................. आगच्छति। (शिक्षकः) ............................... पृच्छति। (वर्गः) ........................ गच्छति। (परीक्षा) ................................. करोति। (प्रश्नाः) .................................... पृच्छति।

पुत्रः – सः (अहम्) ...................................... अपि पृच्छति वा ?

पिता – आम्, (भवान्) ................................... अपि पृच्छति।

पुत्रः – (कः प्रश्नः) ................................ पृच्छति।

पिता – तत् अहं किं जानामि ? भवान् इदानीं (सर्वे पाठाः) ...........................

| **तम्** | **ताम्** | **तत्** | **भवन्तम्** |
|---|---|---|---|
| **एतम्** | **एताम्** | **एतत्** | **भवतीम्** |
| **कम्** | **काम्** | **किम्** | **माम्** |




सः केशवः।

केशवस्य **पुरतः** शकटः अस्ति।

तस्य **पृष्ठतः** देवालयः अस्ति।

तस्य **दक्षिणतः** विद्यालयः अस्ति।

तस्य **वामतः** वसतिमन्दिरम् अस्ति।

देवालयस्य **उपरि** कलशः अस्ति।

शकटस्य **अधः** शुनकः अस्ति।

| | |
|---|---|
| **पुरतः** | **पृष्ठतः** |
| **वामतः** | **दक्षिणतः** |
| **उपरि** | **अधः** |

**अ) एतत् चित्रं पश्यतु। अनन्तरम् एतानि वाक्यानि शुद्धानि अथवा अशुद्धानि इति लिखतु -**



१. गृहस्य पुरतः वृक्षः अस्ति। ✓

२. गृहस्य वामतः उद्यानम् अस्ति। ×

३. बालकः वृक्षस्य उपरि अस्ति। .......

४. वृक्षस्य अधः वृद्धः अस्ति। .......

५. गृहस्य पृष्ठतः मार्गः अस्ति। .......

६. बालकस्य हस्ते नालिकेरः अस्ति।.....

**आ) एतत् चित्रं दृष्ट्वा उपरि-अधः-पुरतः-पृष्ठतः-वामतः-दक्षिणतः-एतेषाम् उपयोगं कृत्वा ६ वाक्यानि लिखतु -**

१. ..........................................................................................................।

२. ..........................................................................................................।

३. ..........................................................................................................।

४. ..........................................................................................................।

५. ..........................................................................................................।

६. ..........................................................................................................।

इ) बालकः कुत्र अस्ति? बालकः बहिः अस्ति।

बालिका कुत्र अस्ति ? बालिका अन्तः अस्ति।

मार्जारः ...................................................................................?

...............................................................................................।

शुनकः .....................................................................................?

...............................................................................................।



| अन्तः | बहिः |
|---|---|



पुत्रः - एतत् लोकयानं **कुतः** आगतम् ?

पिता - **मैसूरुतः** आगतम्।

पुत्रः - **इतः** कुत्र गच्छति ?

पिता - **इतः** मैसूरु गच्छति।

पुत्रः - **ततः** कदा आगमिष्यति ?

पिता - **ततः** श्वः आगमिष्यति।

पुत्रः - एते जनाः किं कुर्वन्ति ?

पिता - एते **इतस्ततः** सञ्चरन्ति।

| | | |
|---|---|---|
| **इतः** | **ततः** | **कुतः** |
| **............तः** | **इतस्ततः** | |

**विशेषसूचना -**

| | | | |
|---|---|---|---|
| **अत्रत** | ✗ | **इतः** | ✓ |
| **तत्रतः** | ✗ | **ततः** | ✓ |
| **कुत्रतः** | ✗ | **कुतः** | ✓ |
| **उपरितः** | ✗ | **उपरिष्टात्** | ✓ |

बेङ्गलूरू

शृङ्गेरी

धर्मस्थलम्

मङ्गलूरु

अनन्तशयनम्

कन्याकुमारी

रामेश्वरम्

पाण्डिचेरी

चेन्नै ( मद्रास् )

तिरुपतिः

**शङ्करः बेङ्गलूरुतः प्रस्थाय दक्षिणभारतप्रवासं कृतवान्। सः कुतः कुत्र गतवान् इति लिखतु -**

यथा - शङ्करः बेङ्गलूरुतः शृङ्गेरीं गतवान्।

शृङ्गेरीतः धर्मस्थलं गतवान्

..........................................................................................................।

..........................................................................................................।

..........................................................................................................।

..........................................................................................................।

..........................................................................................................।

..........................................................................................................।

..........................................................................................................।

.......................................................................................... बेङ्गलूरु आगतवान्।

## शीघ्रम् मन्दम्

उदा॰ – अश्वः **शीघ्रं** गच्छति।
कूर्मः **मन्दं** गच्छति।

## उच्चैः शनैः

उदा॰ – सिंहः उच्चैः गर्जति।
बालिका शनैः गायति।

**अ) शीघ्रम्, मन्दम्, उच्चैः शनैः एतेषु उचितेन रूपेण रिक्तस्थान पूरयतु –**

१) सः ................................................................ भोजनं करोति।

२) उन्मत्तः ................................................................ हसति।

३) मम माता ................................................................ कार्यं करोति।

४) भवती ................................................................ सम्भाषणं करोतु।

५) न शृणोमि, कृपया किञ्चित् ................................................................ वदतु।

६) ................................................................ प्रस्थानं करोतु, विलम्बः भवति।

७) इतोऽपि समयः अस्ति, ................................................................ भोजनं करोतु।

८) एतत् लोकयानं सर्वदा ................................................................ गच्छति।

९) अत्र शिशुः निद्रां करोति, कृपया ................................................................ वदतु।

१०) सः ................................................................ भाषणं करोति, ध्वनिवर्धकम् एव न आवश्यकम्।

## कथम् ?
## सम्यक् समीचीनम् उत्तमम् सुन्दरम्

**एतेषां प्रश्नानाम् उत्तरं लिखतु –**

यथा – आरोग्यं कथम् अस्ति ? आरोग्यं सम्यक् अस्ति।

वातावरणं कथम् अस्ति ? ................................................................।

बालकः कथं धावति ? ................................................................।

एतत् वस्त्रं कथम् अस्ति ? ................................................................।

भीमसेनजोशी कथं गायति ? ................................................................।

गावस्कर् कथं क्रीडति ? ................................................................।

**एतेषाम् उत्तराणां प्रश्नान् लिखतु -**

यथा - उद्यानं सुन्दरम् अस्ति। उद्यानं कथम् अस्ति ?

भोजनम् उत्तमम् अस्ति। ..............................................?

एतत् चलनचित्रं सम्यक् नास्ति। ..............................................?

तत् पुस्तकम् उत्तमम् अस्ति। ..............................................?

सः सर्वं कार्यं सम्यक् करोति। ..............................................?

रामायणं बहु विस्तृतम् अस्ति।..............................................?

## किमर्थम् ?

**सः किमर्थं विद्यालयं गच्छति ?**

**सः पठनार्थं विद्यालयं गच्छति।**

**अ) अत्र शब्दद्वयं लिखितम् अस्ति। तत् उपयुज्य प्रश्नम् उत्तरं च लिखतु -**

यथा - योगासनम्/ आरोग्यार्थम्

सः किमर्थं योगासनं करोति ?

सः आरोग्यार्थं योगासनं करोति।

1. ग्रन्थालयम्/पठनार्थम्

.................................................................................................................... गच्छति।

......................................................................................................................।

2. चिकित्सालयम्/औषधार्थम्

.................................................................................................................... गच्छति।

......................................................................................................................।

3. विदेशम्/प्रवासार्थम्

....................................................................................................................गतवान्?

......................................................................................................................।

# भूतकालरूपाणि

**रिक्तानि स्थलानि पूरयतु -**

| | | पुँल्लिङ्गे | | स्त्रीलिङ्गे | |
|---|---|---|---|---|---|
| | | **ए.व.** | **ब.व.** | **ए.व.** | **ब.व.** |
| पठति | – | पठितवान्– | पठितवन्तः | पठितवती | पठितवत्यः |
| पतति | – | पतितवान्– | पतितवन्तः | पतितवती | पतितवत्यः |
| वदति | – | उक्त– | ----- | ----- | ----- |
| पिबति | – | पीत– | ----- | ----- | ----- |
| लिखति | – | लिखित– | ----- | ----- | ----- |
| नयति | – | नीत– | ----- | ----- | ----- |
| पश्यति | – | दृष्ट– | ----- | ----- | ----- |
| पृच्छति | – | पृष्ट– | ----- | ----- | ----- |
| त्यजति | – | त्यक्त– | ----- | ----- | ----- |
| खादति | – | खादित– | ----- | ----- | ----- |
| जानाति | – | ज्ञात– | ----- | ----- | ----- |
| करोति | – | कृत– | ----- | ----- | ----- |
| शृणोति | – | श्रुत– | ----- | ----- | ----- |
| ददाति | – | दत्त– | ----- | ----- | ----- |
| उत्तिष्ठति | – | उत्थित– | ----- | ----- | ----- |
| उपविशति | – | उपविष्ट– | ----- | ----- | ----- |
| स्थापयति | – | स्थापित– | ----- | ----- | ----- |
| गृह्णाति | – | गृहीत– | ----- | ----- | ----- |
| रोदिति | – | रुदित– | ----- | ----- | ----- |
| शक्नोति | – | शक्त– | ----- | ----- | ----- |
| भवति | – | अभवत्– | अभवन् | अभवत् | अभवन् |

| वर्तमानकालः | | भूतकालः | |
|---|---|---|---|
| **अस्ति** | **सन्ति** | **आसीत्** | **आसन्** |
| **अस्मि** | **स्मः** | **आसम्** | **आस्म** |

**एतत् सम्भाषणं पठतु –**



**"रङ्गनाथ! ह्यः भवान् कुत्र आसीत्?"**

**"अहं मित्रस्य गृहे आसम्।"**

**"तत्र कः विशेषः आसीत् ?"**

**"मित्रस्य[२] जन्मदिनम् आसीत्।**

**"तत्र जयरामः,[३] अनन्तः[४], रामकृष्णः[५]**
**इत्यादयः आसन् वा?"**

**"आम्, सर्वे अपि आसन्।"**

**"भवतः गृहतः के के तत्र गतवन्तः?"**

**'वयं सर्वे अपि गतवन्तः आस्म।"**

एतस्मिन् सम्भाषणे **१, २, ३, ४, ५** अत्र सुरेशः, महेशः, गोविन्दः, मोहनः, राजीवः इति शब्दपरिवर्तनं कृत्वा पुनः सम्भाषणं पठतु।

**एतां कथां पठतु –**

कश्चित् बालकः **<u>अस्ति</u>**। तस्य नाम सुधीरः। एकदा सुधीरः नगरं **<u>गच्छति</u>**। शिरस्त्राणि **<u>क्रीणाति</u>**। तेषां विक्रयणार्थं ग्रामं **<u>गच्छति</u>**। मार्गे अरण्यम् **<u>अस्ति</u>**। सुधीरः श्रान्तः **<u>भवति</u>**। सः वृक्षस्य अधः **<u>उपविशति</u>**। शिरस्त्रपेटिकां पार्श्वे **<u>स्थापयति</u>**। तत्र एव निद्रां **<u>करोति</u>**।

तत्र केचन वानराः **<u>सन्ति</u>**। एकः वानरः सुधीरस्य समीपम् **<u>आगच्छति</u>**। सः पेटिकां **<u>पश्यति</u>**। **उद्घाटयति**। एकं शिरस्त्रं **गृह्णाति**। शिरसि **धारयति**। पुनः वृक्षस्य उपरि **<u>गच्छति</u>**, **<u>उपविशति</u>**।

अन्ये अपि वानराः एतत् **<u>पश्यन्ति</u>**। ते अपि शिरस्त्रम् **<u>इच्छन्ति</u>**। अतः अधः **<u>आगच्छन्ति</u>**, शिरस्त्राणि **<u>धारयन्ति</u>**, वृक्षे **<u>उपविशन्ति</u>**।

सुधीरः जागरितः **<u>भवति</u>**। पुरतः **<u>पश्यति</u>**। एकम् अपि शिरस्त्रं **<u>नास्ति</u>**! सः वानरान् **<u>पश्यति</u>**। शिरस्त्राणि तत्र **<u>सन्ति</u>**। सः दण्डं **<u>दर्शयति</u>**। वानराः वृक्षशाखाः **<u>दर्शयन्ति</u>**। सुधीरः शिलाखण्डं **<u>क्षिपति</u>**। वानराः फलानि **<u>क्षिपन्ति</u>**।

सुधीरः उपायं **करोति**। वानराः अनुकरणशीलाः इति सः **जानाति**। सः स्वकीयं शिरस्त्रं भूमौ **क्षिपति**। सर्वे अपि वानराः शिरस्त्राणि **क्षिपन्ति**। सुधीरः सर्वाणि **सङ्गृह्णाति**। शीघ्रम् अन्यत्र **गच्छति**।

**कथायां स्थूलरूपेण दृश्यमानानि क्रियापदानि भूतकालेन परिवर्तयतु -**

यथा -

| | | | | | |
|---|---|---|---|---|---|
| **अस्ति** | **आसीत्** | **गच्छति** | **गतवान्** | ........... | ........... |
| **क्रीणाति** | **क्रीतवान्** | **भवति** | **अभवत्** | ........... | ........... |
| ........... | ........... | ........... | ........... | ........... | ........... |
| ........... | ........... | ........... | ........... | ........... | ........... |
| ........... | ........... | ........... | ........... | ........... | ........... |
| ........... | ........... | ........... | ........... | ........... | ........... |
| ........... | ........... | ........... | ........... | ........... | ........... |

**इदानीं क्रियापदानां भूतकालरूपाणि उपयुज्य कथां पुनः पठतु ।**

**एतत् दृष्ट्वा कः कदा कुत्र असीत् इति लिखतु -**

| | | |
|---|---|---|
| सन्दीपः | १०-०० | विद्यालयः |
| दिव्या | ११-०० | क्रीडाङ्गणम् |
| कृष्णः | १२-०० | गृहम् |
| अहम् | ७-०० | ग्रन्थालयः |
| वयम् | ८-०० | वित्तकोषः |

**यथा -** १. सन्दीपः दशवादने विद्यालये आसीत्।

२. ..........................................................................................................।

३. ..........................................................................................................।

४. ..........................................................................................................।

५. ..........................................................................................................।

६. ..........................................................................................................।

## भविष्यत्कालरूपाणि

सुब्रह्मण्यः श्वः विद्यालयं न गमिष्यति। सः चिकित्सालयं गमिष्यति। तत्र वैद्यं द्रक्ष्यति। तेन सह सम्भाषणं करिष्यति। स्वस्य अनारोग्यं निवेदयिष्यति। सः श्वः न क्रीडिष्यति। गृहे उपविश्य पाठं पठिष्यति।

**सुब्रह्मण्यः श्वः किं किं करिष्यति इति तत्र लिखितम् अस्ति।**

**भवान् श्वः किं किं करिष्यति इति अत्र लिखतु –**

यथा – अहं श्वः मैसूरु गमिष्यामि। तत्र ..................................................................................................।

...........................................................................। ...........................................................................................।

...........................................................................। ...........................................................................................।

...........................................................................। ...........................................................................................।

**विशेषरूपाणि –**

| | | | |
|---|---|---|---|
| पिबति | पास्यति | पृच्छति | प्रक्ष्यति |
| ददाति | दास्यति | त्यजति | त्यक्ष्यति |
| जानाति | ज्ञास्यति | शक्नोति | शक्ष्यति |
| शृणोति | श्रोष्यति | उपविशति | उपवेक्ष्यति |
| लिखति | लेखिष्यति | उत्तिष्ठति | उत्थास्यति |
| मिलति | मेलिष्यति | गृह्णाति | ग्रहीष्यति |

## सम्बोधनरूपाणि

रामः, कृष्णः, गोविन्दः, गौरी, मित्रम् - इत्यादीनां सर्वेषां शब्दानां सम्बोधनरूपाणि भिन्नानि भवन्ति।

| यथा - रामः | राम! | सीता | सीते! |
|---|---|---|---|
| कृष्णः | कृष्ण! | रमा | रमे! |
| गोविन्दः | गोविन्द! | मान्या | मान्ये! |
| हरिः | हरे! | गौरी | गौरि! |
| गुरुः | गुरो! | भगिनी | भगिनि! |
| राजा | राजन्! | लक्ष्मीः | लक्ष्मि! |
| महाराजः | महाराज! | अम्बा | अम्ब! |
| महोदयः | महोदय! | माता | मातः! |
| पिता | पितः! | | |

**एतस्मिन् सम्भाषणे रिक्तानि स्थलानि आवरणे दत्तानां शब्दानां सम्बोधनरूपैः पूरयतु -**

यथा - १) मित्र! कुत्र गच्छति ? (मित्रम्)

२) ..........................................................! अत्र आगच्छतु। (भगिनी)

३) ..........................................................! कृपया एतत् पाठयतु (मान्या)

४) ..........................................................! कोलाहलं मा करोतु (कृष्णः)

५) ..........................................................! भवती अपि आगच्छति वा ? (लक्ष्मीः)

६) ..........................................................! आगच्छतु, आपणं गच्छामः। (गौरी)

७) ..........................................................! किञ्चित् सारं परिवेषयतु। (अम्बा)

८) ..........................................................! भवती किमर्थं किमपि न वदति ? (राधा)

९) ..........................................................! दूरे उपविश्य दूरदर्शनं पश्यतु। (लता)

१०) ..........................................................! किमर्थं रोदिति भवती ? (नलिनी)

## यदि - तर्हि

**अत्र वाक्यद्वयं लिखितम् अस्ति। 'यदि - तर्हि' इति योजयित्वा एकं वाक्यं कृत्वा लिखतु -**

यथा - १) विद्युत् अस्ति। दीपः ज्वलति।

यदि विद्युत् अस्ति तर्हि दीपः ज्वलति।

२) स्नानं न करोति। शरीरं मलिनं भवति।

..............................................................................................।

३) कार्यालयस्य विरामः अस्ति। चलनचित्रं पश्यामि।

..............................................................................................।

४) आत्मविश्वासः अस्ति। सर्वं सुलभं भवति।

..............................................................................................।

५) सर्वे सत्कार्यं कुर्वन्ति। देशस्य उन्नतिः भवति।

..............................................................................................।

६) मूल्यं न्यूनम् अस्ति। फलानि क्रीणामि।

..............................................................................................।

७) भवती विपणिं गच्छति। अहमपि आगच्छामि।

..............................................................................................।

८) भवान् न पठति। परीक्षायाम् उत्तीर्णः न भवति।

..............................................................................................।

९) छात्राः न सन्ति। कथं पाठं करोमि ?

..............................................................................................।

१०) लोकयानं वेगेन न गच्छति। समये तत्र न प्राप्नुमः।

..............................................................................................।

## च - एव - इति - अपि

**एतत् सम्भाषणं पठतु -**

"भोः मित्र! कुत्र गच्छति भवान् ?"

"प्रवासार्थं गच्छामि।"

"के के गच्छन्ति ?"

"अहं, श्रीनिधिः, भास्करः, विमला च गच्छामः। मेखला **अपि** आगच्छामि **इति** उक्तवती। सा आगच्छति वा न वा **इति** न जानामि।"

"सा न आगच्छति **एव**।"

"भवान् कथं जानाति ?"

"तस्याः गृहे **कोऽपि** कार्यक्रमः अस्ति। अतः सा प्रवासार्थम् आगन्तुं न शक्नोति।"

"एवं वा ? कः कार्यक्रमः ?"

"तस्याः भ्रातुः जन्मदिनम्।"

"तर्हि सा न आगच्छति **एव**। वयं गच्छामः।"

एतेषाम् उपयोगं कृत्वा एकं सम्भाषणं लिखतु -

.................................................................................................

.................................................................................................

.................................................................................................

.................................................................................................

.................................................................................................

.................................................................................................

.................................................................................................

.................................................................................................

## ..........तः ................ पर्यन्तम्

*** अत्र नारायणस्य दिनचर्या लिखिता अस्ति तत् दृष्ट्वा वाक्यानि लिखतु –**

| | | | |
|---|---|---|---|
| ६.०० – ७.०० | **योगासनम्** | ५.०० – ६.०० | **क्रीडा** |
| ७.१५ – ८.१५ | **गृहपाठः** | ६.३० – ७.३० | **अध्ययनम्** |
| १०.०० – ५.०० | **विद्यालयः** | १०.०० – ५.०० | **निद्रा** |

१. नारायण ६.०० तः ७.०० पर्यन्तं योगासनं करोति।

२. नारायणः .................................................................................................... गृहपाठं लिखति।

३. .................................................................................................... विद्यालये पठति।

४. .................................................................................................... क्रीडति।

५. .................................................................................................... अध्ययनं करोति।

६. .................................................................................................... निद्रां करोति।

*** अत्र कर्णाटकमुख्यमन्त्रिणः कार्यक्रमस्य विवरणम् अस्ति। तत् दृष्ट्वा सः कदा कुत्र तिष्ठति इति लिखतु –**

| जनवरी – | | |
|---|---|---|
| | १ – ७ | **बेङ्गलूरु** |
| | ८ – १३ | **मैसूरु** |
| | १४ – १७ | **धारवाड** |
| | १८ – २० | **गुल्बर्ग** |
| | २१ – २४ | **कोलार** |
| | २५ – ३० | **चेन्नै ( मद्रास् )** |

१. जनवरी १ तः ७ पर्यन्तं मुख्यमन्त्री बेङ्गलूरुनगरे तिष्ठति।

२. .................................................................................................... मैसूरुनगरे तिष्ठति।

३. ....................................................................................................।

४. ....................................................................................................।

५. ....................................................................................................।

६. ....................................................................................................।



माला – गोपाल! भवतः परीक्षा समीपम् आगता अस्ति। अद्य आरभ्य प्रतिदिनं पठतु।

गोपालः – अद्य अहं मित्रस्य[१] गृहं गच्छामि। श्वः आरभ्य पठिष्यामि भगिनि!

माला – भवतु। गोपाल! विद्यालये योगासनकक्ष्या[२] कदा आरभ्य भविष्यति ?

गोपालः – परश्वः आरभ्य भविष्यति।

माला – परश्वः मम अवकाशः न भविष्यति। प्रपरश्वः आरभ्य अहमपि योगासनकक्ष्याम्[३] आगमिष्यामि।

गोपालः – भगिनि! मातुलस्य[४] पत्रम् आगतं वा ?

माला – नैव भोः। अहं परह्यः आरभ्य तस्य प्रतीक्षां कृतवती। परन्तु न आगतम् एव।

**एतस्मिन् सम्भाषणे १,२,३,४ स्थाने रमेशस्य, सङ्गीतकक्ष्या, सङ्गीतकक्ष्याम्, पितृव्यस्ये – इति परिवर्तनं कृत्वा सम्भाषणं पुनः लिखतु –**

माला – ..........................................................................................।

गोपालः – ..........................................................................................।

माला – ..........................................................................................।

गोपालः – ..........................................................................................।

माला – ..........................................................................................।

गोपालः – ..........................................................................................।

एकम् - द्वे - त्रीणि - चत्वारि इत्येतासां लिङ्गभेदः अस्ति।
तदनन्तरं लिङ्गभेदः नास्ति।






एकः बालकः
एका बालिका
एकं फलम्






बालकद्वयम्
बालिकाद्वयम्
फलद्वयम्






त्रयः बालकाः
तिस्रः बालिकाः
त्रीणि फलानि






चत्वारः बालकाः
चतस्रः बालिकाः
चत्वारि फलानि






पञ्च बालकाः
पञ्च बालिकाः
पञ्च फलानि

**कति सन्ति इति लिखतु -**


(युतकम्) ..................


(शुनकः) ..................


(पिपीलिका) ..................


(गजः) ..................


(सिंहः) ..................


(धेनुः) ..................


(मक्षिका) ..................


(गर्दभः) ..................


(व्याघ्रः) ..................


(अर्धोरुकम्) ..................


(माला) ..................


(ऊरुकम्) ..................


(पाञ्चालिका)..................


(करांशुकम्) ..................


(गृहगोधिका) ..................


(चोलः) ..................


(शाटिका) ..................


(पादांशुकम्) ..................


(शिरस्त्रम्) ................


(वानरः) ................


(अन्तर्युतकम्) ................

**चित्राणां साहाय्येन रिक्तस्थलानि पूरयतु - यथा -**



हस्तः — सः हस्तेन कार्यं करोति।



सीवनयन्त्रम् — सा .................. वस्त्रं सीवयति।



लोकयानम् — जनाः ..................... प्रयाणं कुर्वन्ति।



स्यूतः — एषः ...................... वस्तूनि आनयति।



द्विचक्रिका — भारती ................. विद्यालयं गच्छति।



कुञ्चिका — एषा ................. तालम् उद्घाटयति।



कर्तरी — सौचिकः ................. वस्त्रं कर्तयति।



दूरवाणी — आपणिकः ............ सम्भाषणं करोति।



अङ्कनी — बालिका .................. चित्रं लिखति।



# सह

स: **पुत्रेण सह** आपणं गच्छति।
सा **सख्या सह** विद्यालयं गच्छति।



**उदाहरणं दृष्ट्वा तादृशवाक्यानि लिखतु -**

१. रामः/**रावणः** .................... युद्धं कृतवान्।

राम: रावणेन सह युद्धं कृतवान्

२. लक्ष्मणः/**रामः** .................... वनं गतवान्।

.......................................................................................................................।

३. गोपालः/**माधवः** .................................... अभ्यासं करोति।

.......................................................................................................................।

४. अहं/**मित्रम्** ................................ नाटकं पश्यामि।

.......................................................................................................................।

५. एषा/**सीता** .................................... तिष्ठति।

.......................................................................................................................।

६. सुरेशः/**भगिनी** .................................. सम्भाषणं करोति।

.......................................................................................................................।

७. माता/**पुत्री** .......................................... कार्यं करोति।

.......................................................................................................................।

८. अध्यापक: / **छात्राः** ............................. प्रवासार्थं गतवान्।

.......................................................................................................................।

९. लता/**सख्यः** .................................. क्रीडति।

.......................................................................................................................।

| | |
|---|---|
| छात्रेण - छात्रैः | मित्रेण - मित्रैः |
| बालिकया - बालिकाभिः | सख्या - सखीभिः |

**एतेषु वाक्येषु पदानि अव्यवस्थितानि सन्ति। तानि व्यवस्थितानि लिखतु –**

यथा – 1. करोति सह दिनेश: मित्रै: प्रतिदिनं अभ्यासं।

दिनेश: प्रतिदिनं मित्रै: सह अभ्यासं करोति।

2. आगतवान् सह क: भवता ?

.............................................................................................................।

3. कलहं स: सह करोति सर्वै:।

.............................................................................................................।

4. आगच्छामि वा अहम् अपि सह भवत्या ?

.............................................................................................................।

5. युद्धं सैनिक: सह करोति शत्रुभि:।

.............................................................................................................।

6. करोति वैद्य: सह रोगिभि: सम्भाषणं।

.............................................................................................................।

7. ललिता सह कृतवती चर्चां अध्यापिकाभि:।

.............................................................................................................।

## विना

**उदाहरणं दृष्ट्वा अन्यवाक्यानि लिखतु –**

जलेन विना मीन: न जीवति।

.................................................................................................... जीवनं कठिनम्।

.................................................................................................... वाहनं न चलति।

.................................................................................................... अहं विद्यालयं न गच्छामि।

.............................................................................................................।

.............................................................................................................।

विशेषसूचना – जलं विना मीन: न जीवति इत्येतादृश: प्रयोग: अपि शुद्ध: एव।

# अद्यतन - श्वस्तन - ह्यस्तन



**अ ) एतत् सम्भाषणं पठतु -**

''अद्य परीक्षा आसीत् वा ?''

''आम्, आसीत्।''

''<u>**अद्यतन**</u>प्रश्नपत्रिका कथम् आसीत् ?''

''<u>**अद्यतन**</u>प्रश्नपत्रिका सरला आसीत्।
<u>**ह्यस्तन**</u>पत्रिका तु कठिना आसीत्''

''<u>**श्वस्तन**</u>परीक्षार्थम् अभ्यासं कृतवान् वा ?''

''आम्, किञ्चित् कृतवान्।''



**आ ) एतत् सम्भाषणं चिन्तयित्वा लिखतु -**

**''अद्यतनपत्रिकां पठितवान् वा ?''**

**''न, कः विशेषः अस्ति ?''**

''..........................................................................................................।''

''..........................................................................................................।''

''..........................................................................................................।''

''..........................................................................................................।''

# गत- आगामि

| गत | मासे<br>दिने<br>सप्ताहे<br>वर्षे | निर्वाचनम् आसीत्।<br>..................................................।<br>मम गृहे अतिथिः आसीत्।<br>..................................................। |
|---|---|---|
| आगामि | वर्षे<br>मासे<br>सप्ताहे<br>पर्वदिने | ..................................................।<br>मम मित्रम् आगमिष्यति।<br>..................................................।<br>..................................................। |

**कोष्ठकस्य साहाय्येन वाक्यानि लिखतु -**

यथा - १. गतमासे निर्वाचनम् आसीत्।

२. आगामिवर्षे मम मित्रम् आगमिष्यति।

३. ..................................................................................।

४. ..................................................................................।

५. ..................................................................................।

६. ..................................................................................।

७. ..................................................................................।

८. ..................................................................................।

# यावत् - तावत्

**एतानि वाक्यानि पूर्णानि करोतु -**

उदा - **नद्यां यावत्** जलम् अस्ति **तावत्** सरोवरे नास्ति।

१. कर्णाटकं **यावत्** विशालं, केरलं **तावत्** विशालं नास्ति।

२. एषा **यावत्** कार्यं करोति ..........................................................।

३. भीमस्य **यावत्** धैर्यम् अस्ति ..................................................।

४. सः **यावत्** वदति .......................................................................।

५. मम भगिनी **यावत्** पठति ..........................................................।

६. अहं मधुरं **यावत्** इच्छामि .........................................................।

७. सुधा **यावत्** क्रीडति ..................................................................।



## स्म

सुन्दरेशः बन्धुगृहं गत्वा आगतवान्।
तत्र कः कः किं करोति स्म
इति सः मातरं वदति -



१) मातुलानी पाकं करोति स्म।

२) मातुलः ..........................................................................................।

३) रमा ..........................................................................................।

४) सुधा ..........................................................................................।

५) रमेशः ..........................................................................................।

६) लीला ..........................................................................................।

७) मातामहः ..........................................................................................।

८) मातामही ..........................................................................................।

## क्त्वा

१) **सः शालां गच्छति, पाठं पठति।**

**सः शालां गत्वा पाठं पठति।**

२) ते कार्यं कुर्वन्ति, श्रान्ताः भवन्ति।

.............................................................................................................।

३) शिशुः क्रीडाङ्गणे पतति, रोदनं करोति।

.............................................................................................................।

४) अहं फलं खादितवान्, जलं पीतवान्।

.............................................................................................................।

५) किञ्चित् पानीयं पिबतु, अनन्तरं गच्छतु।

.............................................................................................................।

६) सा पत्रं लिखितवती, प्रेषितवती।

.............................................................................................................।

७) भवन्तः वार्तां शृण्वन्ति। विषयं जानन्ति।

.............................................................................................................।

८) वयं नाटकं पश्यामः। गृहम् आगच्छामः।

.............................................................................................................।

९) ताः बालिकाः विषयं स्मरन्ति, सम्यक् लिखन्ति।

.............................................................................................................।

### विशेषरूपाणि -

| | | |
|---|---|---|
| **ददाति - दत्त्वा** | **अस्ति - भूत्वा** | **पृच्छति - पृष्ट्वा** |
| **गृह्णाति - गृहीत्वा** | **रोदिति - रुदित्वा** | **उपविशति - उपविश्य** |
| **प्रक्षालयति - प्रक्षाल्य** | **उत्तिष्ठति - उत्थाय** | **आनयति - आनीय** |
| **आगच्छति - आगत्य** | **स्वीकरोति - स्वीकृत्य** | **आह्वयति - आहूय** |




अ ) नारायणः गोविन्दस्य गौतम्याः च पुत्रः।

लता नरसिंहस्य गिरिजाम्बायाः च पुत्री। (दुहिता)

नारायणः केशवस्य सुमायाः च पिता।

लता केशवस्य सुमायाः च माता।

केशवः गोविन्दस्य गौतम्याः च पौत्रः।

सुमा गोविन्दस्य गौतम्याः च पौत्री।

केशवः नरसिंहस्य गिरिजाम्बायाः च दौहित्रः।

सुमा नरसिंहस्य गिरिजाम्बायाः च दौहित्री।

गोविन्दः केशवस्य सुमायाः च पितामहः।

गौतमी केशवस्य सुमायाः च पितामही।

नरसिंहः केशवस्य सुमायाः च मातामहः।

गिरिजाम्बा केशवस्य सुमायाः च मातामही।

नारायणः नरसिंहस्य गिरिजाम्बायाः च जामाता। (पुत्र्याः पतिः)

लता गोविन्दस्य गौतम्याः च स्नुषा। (पुत्रस्य पत्नी)

गोविन्दः लतायाः श्वशुरः। गौतमी लतायाः श्वश्रूः।

नरसिंहः नारायणस्य श्वशुरः। गिरिजाम्बा नारायणस्य श्वश्रूः।

**आ ) एतानि वाक्यानि पठतु -**

उमानाथः वित्तकोषे अधिकारी। तस्य पिता वीरभद्रः, माता इन्दिरा। उमानाथः शालिनीं परिणीतवान्। शालिन्याः पिता जगदीशः माता पुष्पा। उमानाथस्य पुत्री सुधा, पुत्रः प्रभाकरः।

**रिक्तस्थलानि उचितैः शब्दैः पूरयतु -**

१. उमानाथः वीरभद्रस्य ..........................................................................................।

२. उमानाथः प्रभाकरस्य ..........................................................................................।

३. प्रभाकरः वीरभद्रस्य ..........................................................................................।

४. ........................................................................................................... पितामहः।

५. ........................................................................................................... दौहित्रः।

६. ........................................................................................................... मातामहः।

**अन्ये केचन बन्धुवाचकाः शब्दाः -**

**मातुलः - मातुः भ्राता**
**मातुलानी - मातुलस्य पत्नी**
**भागिनेयः - भगिन्याः पुत्रः**
**भागिनेयी - भगिन्याः पुत्री**
**पितृव्यः - पितुः भ्राता**
**पितृभगिनी - पितुः भगिनी**
**श्यालः - पत्न्याः भ्राता**
**देवरः - पत्युः भ्राता**
**आवुत्तः - भगिन्याः पतिः**

# रुचिवाचकाः शब्दाः

| | |
|---|---|
| लवणम् | लवणस्य रुचिः लवणः। |
| जम्बीरम् | जम्बीरस्य रुचिः आम्लः। |
| चाकलेहः | चाकलेहस्य रुचिः मधुरः। |
| मरीचिका | मरीचिकायाः रुचिः कटुः। |
| कारवेल्लम् | कारवेल्लस्य रुचिः तिक्तः। |
| आमलकम् | आमलकस्य रुचिः कषायः। |

**एतानि वाक्यानि पठतु। अशुद्धानि वाक्यानि शुद्धानि करोतु –**

यथा – गुडस्य रुचिः कटुः।

न, गुडस्य रुचिः मधुरः।

१. मरीचिकायाः रुचिः मधुरः। – –

...............................................................................................।

२. आम्रफलस्य रुचिः तिक्तः। – –

...............................................................................................।

३. अवलेहस्य रुचिः मधुरः। – –

...............................................................................................।

४. तिन्तिण्याः रुचिः कटुः। – –

...............................................................................................।

*** एतत् सम्भाषणं पठतु –**

पुत्रः – अम्ब! किम्, अद्य क्वथितं बहु **कटु** अस्ति।

माता – तर्हि, क्वथितं मा स्वीकरोतु। तक्रं परिवेषयामि।

पुत्रः – तक्रं बहु **आम्लम्** अस्ति अम्ब!

माता – भवान् तु केवलं **मधुरम्** इच्छति। एतत् मोदकं खादतु। बहु **मधुरम्** अस्ति।

पुत्रः – सत्यम्, अम्ब! एतत् **मधुरम्** अस्ति।

माता – कारवेल्लस्य व्यञ्जनम् अस्ति। किञ्चित् परिवेषयामि वा ?

पुत्रः – मास्तु अम्ब, कारवेल्लं **तिक्तं** भवति। अहं **तिक्तं** न इच्छामि।
किञ्चित् **लवणं** परिवेषयतु।

माता – स्वीकरोतु। आमलकस्य अवलेहं किञ्चित् परिवेषयामि वा ?

पुत्रः – अस्तु, परिवेषयतु। अम्ब, आमलकस्य रुचिः **कषायः** अस्ति।

माता – तर्हि जम्बीरस्य अवलेहं स्वकरोतु।

पुत्रः – स तु **आम्लः** अस्ति, अम्ब।

माता – भवान् तु **मधुरम्** एकमेव इच्छति। परन्तु शरीरस्य वर्धनार्थं सर्वविधाः
रुचयः अपि आवश्यिकाः एव।

*** एतेषाम् उत्तरं लिखतु –**

१. क्वथितं कथम् अस्ति ? ..............................................................................।

२. तक्रं कथम् अस्ति ? ..............................................................................।

३. किं तिक्तं भवति ? ..............................................................................।

४. आमलकस्य रुचिः का ?..............................................................................।

५. भवान् किम् इच्छति ? ..............................................................................।

६. गुडस्य रुचिः का ? ..............................................................................।

## यदा - तदा

१. **यदा** अहं तत्र गतवान्, **तदा** सः पठति स्म।

२. **यदा** भवान् बेङ्गलूरु आगमिष्यति, **तदा** मम गृहे एव वासं करोतु।

३. अहं सज्जः भवामि। **यदा** भवान् आगच्छति, **तदा** गच्छामः।

४. **यदा** वयं काश्मीरं गतवन्तः, **तदा** तत्र बहु शैत्यम् आसीत्।

५. **यदा** अहं भवतः गृहम् आगतवान्, **तदा** भवान् कुत्र गतवान् आसीत् ?

६. **यदा** अहं विद्यार्थिनी आसम्, **तदा** संस्कृतं पठितवती।

*** एतादृशनि पञ्चवाक्यानि लिखतु -**

१. ..........................................................................................।

२. ..........................................................................................।

३. ..........................................................................................।

४. ..........................................................................................।

५. ..........................................................................................।

## यथा - तथा

**उदाहरणं दृष्ट्वा अनन्तरवाक्येषु रिक्तानि स्थलानि उचितैः शब्दैः पूरयतु -**

उदा - **यथा** गावस्कर् क्रीडति **तथा** अहं न क्रीडामि।

**यथा** भीमसेनजोशी गायति **तथा** अन्यः न गायति।

............................ कालिदासः काव्यं लिखितवान् ..................................................................।

................................रविवर्मा चित्रं ...........................................................................................।

............................ मम मित्रं गायति ..........................................................................................।

........................... भवान् पाठयति ...............................................................................................।

.............................सः उपन्यासं करोति ....................................................................................।

............................ मम अध्यापकः संस्कृतं जानाति ....................................................................।

# विरुद्धार्थकाः शब्दाः

| | |
|---|---|
| उन्नत - वामन | दीर्घ - ह्रस्व |
| पुरातन - नूतन | स्थूल - कृश |
| बृहत् - लघु | अधिकम् - किञ्चित् |

उपरि केचन विरुद्धार्थकाः शब्दाः सन्ति। अधस्तनवक्येषु स्थितानि रिक्तस्थलानि उचितैः विरुद्धार्थकशब्दैः पूरयतु -



नालिकेरवृक्षः .................................. अस्ति।

जम्बीरवृक्षः .................................. अस्ति।




'अ' दण्डः .................................. अस्ति।

'ब' दण्डः .................................. अस्ति।



युतकं .......................................... अस्ति।

पुस्तकं ........................................ अस्ति।



गोविन्दः .................................. बालकः।

समीरः .................................... बालकः।



विधानसौधं .................................. भवनम्।

सन्दीपस्य गृहं .............................. गृहम्।



द्रोण्यां .................................. जलम् अस्ति।

चषके ................................ क्षीरम् अस्ति।

**विशेषसूचना -**

| | | | |
|---|---|---|---|
| स्थूल - | बालकः स्थूलः | नूतन - | ग्रन्थः नूतनः |
| | बालिका स्थूला | | लेखनी नूतना |
| | पुस्तकं स्थूलम् | | युतकं नूतनम् |

## अपेक्षया

**आवरणे विद्यमानस्य पदस्य साहाय्येन वाक्यानि लिखतु -**

उदा - विजयस्य अपेक्षया विनयः उन्नतः। (विजयः)

१. ................................................................................ समीरः चतुरः। (मधुसूदनः)

२. ............................................................................. रामायणं बृहत् काव्यम्। (रघुवंश)

३. मम ........................................................................ भवतः गृहं विशालम्। (गृहम्)

४. बेङ्गलूरू ................................................................ मैसूरुनगरं सुन्दरम् (नगरम्)

५. ................................................................................ भाषणं सुलभम्। (लेखनम्।)

६. ......................................................................................... अपर्णा कृशा। (उमा)

## यत्र - तत्र

**अ ) एतेषां पदानां साहाय्येन अन्यानि वाक्यानि लिखतु -**

यथा - शर्करा - पिपीलिकाः यत्र शर्करा तत्र पिपीलिकाः भवन्ति।

दीपः - प्रकाशः ....................................................................................।

क्रीडा - बालकाः ....................................................................................।

विदूषकः -विनोदः ....................................................................................।

आपणः - ग्राहकः ....................................................................................।

**आ ) द्वितीयं वाक्यं पठित्वा तत्सम्बद्धं प्रथमं वाक्यं लिखतु -**

**यथा - यत्र भवान् गच्छति तत्र अहमपि आगच्छामि।**

१. ........................................................................................ भवान् अपि क्रीडतु।

२. .........................................................................................भवती मा गच्छतु।



आपणिकः – भवती किम् इच्छति।

रमा – अहं पाञ्चालिकाम् इच्छामि।

आपणिकः – कीदृशपाञ्चालिकाम् इच्छति ?

रमा – पश्यतु, ईदृशपाञ्चालिकाम्ः इच्छामि। अस्ति वा ?

आपणिकः अस्ति, परन्तु तादृशपाञ्चालिकायाः मूल्यं २० रूप्यकाणि।

रमा दर्शयतु भोः! (आपणिकः दर्शयति)

– किं भोः! मम सखी अपि ह्यः ईदृशपाञ्चालिकाम् एव क्रीतवती।

– तस्याः मूल्यं तु १० रूप्यकाणि एव।

आपणिकः – प्रायः सा पाञ्चालिका ईदृशपाञ्चालिका न स्यात्।

रमा ईदृशपाञ्चालिका एव भोः, अहं सम्यक् जानामि।

आपणिकः तर्हि पञ्चदश रूप्यकाणि ददातु। नयतु।

रमा न........। न........। पञ्चदश रूप्यकाणि अधिकानि। अहं तु दश रूप्यकाणि ददामि।

आपणिकः भवतु, पाञ्चालिकां स्वीकरोतु।

**विशेषसूचना –**

| | |
|---|---|
| **ईदृश –** | **ईदृशः स्यूतः।<br>ईदृशी घटी।<br>ईदृशं पुस्तकम्।** |

**पूर्वतनसम्भाषणे 'पाञ्चालिका' शब्दस्य स्थाने 'लेखनी' इति शब्दं योजयित्वा सम्भाषणं पुनः लिखतु -**

यथा - आपणिकः - भवती किम् इच्छति ?

रमा - अहं **लेखनीम्** इच्छामि।

आपणिकः - ..........................................................................................।

रमा - ..........................................................................................।

आपणिकः - ..........................................................................................।

रमा - ..........................................................................................।

आपणिकः ..........................................................................................।

रमा - ..........................................................................................।

## तुमुन्

*** आवरणे विद्यमानस्य क्रियापदस्य उचितं रूपम् उदाहरणवाक्ये इव लिखतु -**

उदा - १. रमेशः **क्रीडितुं** (क्रीडति) क्रीडाङ्गणं गच्छति।

२. उमेशः वस्तूनि ....................................... (आनयति) आपणं गतवान्।

३. अहं ................................................ (लिखति) लेखनीम् आनीतवती।

४. जनाः नाटकं ..................................................... (पश्यति) इच्छन्ति।

५. सः अस्वस्थः। अतः कार्यं .............................. (करोति) न शक्नोति।

६. सङ्गीतं ........................................... (शृणोति) भवान् कुत्र गच्छति।

७. जलं ..................................................... (पिबति) चषकः आवश्यकः।

| | |
|---|---|
| **उपविशति - उपवेष्टुम्** | **उत्तिष्ठति - उत्थातुम्** |
| **अस्ति/भवति - भवितुम्** | **क्रीणाति - क्रेतुम्** |
| **गृह्णाति - ग्रहीतुम्** | **पिबति - पातुम्** |
| **आह्वयति - आह्वातुम्** | **मिलति - मेलितुम्** |

# परिवर्तनाभ्यासः ( क्त्वातः तुमुन् )

**कपिलः ग्रन्थालयं गत्वा ग्रन्थं पठति।**

**कपिलः ग्रन्थं पठितुं ग्रन्थालयं गच्छति।**

**एतेन क्रमेण अन्यानि वाक्यानि परिवर्तयतु -**

१) गौरी सखीगृहं गत्वा पुस्तकम् आनयति।

..........................................................................................................................।

२) चित्रकारः चित्रं लिखित्वा धनं सम्पादयति।

..........................................................................................................................।

३) बालिका सम्यक् पठित्वा उत्तीर्णा भवतिं।

..........................................................................................................................।

४) एषः स्नानं कृत्वा शुद्धः भवति।

..........................................................................................................................।

५) सम्यक् विचारं कृत्वा कार्यं करोतु।

..........................................................................................................................।

६) सा पत्रालयं गत्वा पत्रं प्रेषयति।

..........................................................................................................................।

७) उषा लोकयानस्थानकं गत्वा सख्याः स्वागतं करोति।

..........................................................................................................................।

८) महाभारतं पठित्वा अहं अनेकाः कथाः जानामि।

..........................................................................................................................।

९) भवान् काश्मीरं गत्वा विहारं करोतु।

..........................................................................................................................।

१०) सः लेखं लिखित्वा पत्रिकासु प्रकाशयति।

..........................................................................................................................।



वैद्यः किम् अभवत् ?

रोगी ज्वरः श्रीमन्!

वैद्यः कदा आरभ्य ?

रोगी ह्यः आरभ्य। शिरोवेदना अपि अस्ति।

वैद्यः आहारः रोचते वा ?

रोगी आम्, रोचते।

वैद्यः जिह्वां प्रदर्शयतु। भवतु, एतत् औषधम्, एताः गुलिकाः च स्वीकरोतु।

रोगी सूच्यौषधं न आवश्यकं वा ?

वैद्यः न, एतदेव पर्याप्तम्

रोगी अद्य मया स्नानं कर्तुं शक्यते **किल** ?

वैद्यः शक्यते, **किन्तु** उष्णजलेन करोतु। शीतजलेन मास्तु।
यतः भवतः ज्वरः **प्रायशः** शीतकारणतः एव आगतः स्यात्।

रोगी श्रीमन्! अहं श्वः स्वस्थः भविष्यामि वा ?

वैद्यः एतत् औषधं स्वीकरोतु, **निश्चयेन** स्वस्थः भविष्यति।

रोगी धन्यवादः।

**किन्तु, निश्चयेन, प्रायशः, किल**

## चेत्

| | | |
|---|---|---|
| धनम् | | दानम् |
| वृष्टि: | | सस्यसमृद्धि: |
| निर्वाचनम् | | कोलाहल: |
| धूमपानम् | | अनारोग्यम् |
| सत्कार्यम् | चेत् | कीर्ति: |
| विद्युत् | | दीप: |
| उपनेत्रम् | | पठति |
| जलम् | | वस्त्रक्षालनम् |

**एतस्य कोष्ठकस्य साहाय्येन वाक्यानि लिखतु -**

यथा - १. धनम् अस्ति चेत् दानं करोमि।

२. ............................................................ भवति।

३. ......................................................................।

४. ......................................................................।

५. ......................................................................।

६. ......................................................................।

## नो चेत्

**उदाहरणं दृष्ट्वा तादृशानि त्रीणि वाक्यानि लिखतु -**

उदा - १. अवकाश: भवति चेत् आगच्छतु, नो चेत् मास्तु।

२. एतत् वस्त्रम् अल्पमूल्येन ददाति क्रीणामि, नो चेत् न।

३. भवान् तत्र समये गच्छति चेत् लोकयानं लभ्यते, नो चेत् न लभ्यते।

४. ................................................................................।

५. ................................................................................।

६. ................................................................................।

शरीरस्य अवयवानां नामानि अत्र सन्ति। तानि उचिते स्थाने लिखतु।



केशाः
शिरः
ललाटः
कर्णः
नासिका
मुखम्
कपोलः
कण्ठः
वक्षःस्थलम्
स्कन्धः
भुजः
अङ्गुली
नखः
पादः
उदरम्
कटिः

एतान् वर्णान् उपयुज्य शरीरावयवानां १० नामानि लिखतु –

| पा | ल | का | न | म् |
|---|---|---|---|---|
| सि | भु | ट | क | : |
| ना | उ | ल | ज | भ्रू |
| ख | ऊ | ला | त्र | र |
| क | पो | टि | ने | द |

१. ललाटः।
२. ............................................।
३. ............................................।
४. ............................................।
५. ............................................।
६. ............................................।
७. ............................................।
८. ............................................।
९. ............................................।
१०. ............................................।
११. ............................................।

**उदाहरणं दृष्ट्वा तदनुगुणं वाक्यानि परिवर्तयतु -**

उदा - १. आरोग्यं सम्यक् नास्ति। अतः सः चिकित्सालयं गच्छति।

सः चिकित्सालयं गच्छति, यतः आरोग्यं सम्यक् नास्ति।

२. विद्युत् नास्ति। अतः दीपः न ज्वलति।

..........................................................................................।

३. अद्य गणेशोत्सवः। अतः विद्यालयस्य विरामः अस्ति।

..........................................................................................।

४. सम्यक् न पठितवान्। अतः सः परीक्षायाम् अनुत्तीर्णः।

..........................................................................................।

५. संस्कृतं सुलभम्। अतः अहं संस्कृतं पठामि।

..........................................................................................।

६. उदयनः अन्यां भाषां न जानाति। अतः संस्कृतेन वदतु।

..........................................................................................।

७. तस्य मूल्यम् अधिकम्। अतः तत् वस्त्रं मास्तु।

..........................................................................................।

**उदाहरणं दृष्ट्वा एते के इति लिखतु -**

**क्रीडालुः** यः क्रीडति सः क्रीडालुः।

**गायकः** ..........................................................................।

**भाषणकारः** ..........................................................................।

**चालकः** ..........................................................................।

**लेखकः** ..........................................................................।

**वैद्या** या चिकित्सां करोति सा वैद्या।

**नर्तकी** ..........................................................................।

**अध्यापिका** ..........................................................................।

**कार्यकर्त्री** ..........................................................................।

*** एतानि वाक्यानि पठतु -**

1. मम समीपे यत् पुस्तकम् अस्ति तत् अन्यत्र नास्ति।
2. विदेशे यत् तन्त्रज्ञानम् अस्ति तत् भारते नास्ति।
3. अध्यात्मविषये भारतीयानां यत् चिन्तनम् अस्ति तत् अपूर्वम्।

*** एतादृशानि वाक्यानि लिखतु -**

............................ यत् ................................ तत् ........................।

.......................... यत् ................................ तत् ........................।

.....................................................................................................।

.....................................................................................................।

## यद्यपि - तथापि

**अत्र वाक्यद्वयं लिखितम् अस्ति। तत् उदाहरणानुगुणम् एकं वाक्यं कृत्वा लिखतु -**

यथा - सः निर्धनः, दानं करोति।

यद्यपि सः निर्धनः तथापि दानं करोति।

१. मम समयः नास्ति। भवत्याः गृहम् आगच्छामि।

..........................................................................................।

२. सः बुद्धिमान्। परीक्षायाम् अनुत्तीर्णः।

..........................................................................................।

३. अहं भोजनं न कृतवान्। बुभुक्षा नास्ति।

..........................................................................................।

४. अहम् अधिकं पठामि। स्मरणे न तिष्ठति।

..........................................................................................।

५. किञ्चित् कष्टं भवति। अहं योगासनं करोमि।

..........................................................................................।

६. अद्य भानुवासरः। विद्यालयस्य विरामः नास्ति।

..........................................................................................।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अन्यत्र | elsewhere | अन्यत्र | (अ) |
| अवलेहः | pickle | अचार (चटनी) | (पु) |
| आपणः | shop | दूकान | (पु) |
| आमलकम् | gooseberry | आंवला | (न) |
| आवुत्तः | sister's husbnad | बहनोई | (पु) |
| उन्मत्तः | mad | पागल | (पु) |
| ऊरुकम् | trousers | पायजामा | (न) |
| एकत्र | at one place | एकस्थान पर | (अ) |
| कण्ठहारः | necklace | गले का हार | (पु) |
| कपाटिका | cubboard | अलमारी | (स्त्री) |
| कर्मकरः | workder | कार्य करने वाला | (पु) |
| कलायः | groundnut | मूंगफली | (पु) |
| क्वथितम् | sambar | दाल (काढा) | (न) |
| गुडः | jaggery | गुड़ | (पु) |
| गुलिका | tablet | गोली | (स्त्री) |
| गृहपाठः | homework | गृहकार्य | (पु) |
| ग्रन्थालयः | library | पुस्तकालय | (पु) |
| ग्राहकः | customer | खरीददार | (पु) |
| ग्राहिका | customer | खरीददार स्त्री | (स्त्री) |
| चालकः | driver | चालक | (पु) |
| जामाता | son-in-law | जंवाई | (पु) |
| जागरितः | awake | जगा हुआ | (पु) |
| तालः | lock | ताला | (पु) |
| तिन्तिणी | tamarind | इमली | (स्त्री) |
| त्रिचक्रिका | auto | तिपहियायान | (स्त्री) |
| दिनचर्या | daily work | दैनन्दिनकार्य | (स्त्री) |
| दुहिता | daughter | पुत्री | (स्त्री) |
| दूरवाणीविनिमयकेन्द्रम् | telephone exchange | टेलिफोन एक्सचेंज | (न) |
| देवरः | husband's younger brother | देवर | (पु) |
| दौहित्रः | grandson | पुत्री का पुत्र | (पु) |
| दौहित्री | grand daughter | पुत्री की पुत्री | (स्त्री) |
| ध्वनिवर्धकम् | loud speaker | ध्वनिविस्तारकयन्त्र | (न) |
| ननान्दा | younger brother's wife | ननद | (स्त्री) |
| नागरिकः | citizen | नागरिक | (पु) |
| निधानिका | shelf | दराज | (स्त्री) |
| निमीलनम् | colsing of eyes | आंख मूंदना | (न) |
| निर्वाचनम् | election | चुनाव | (न) |
| पत्रालयः | post office | डाकघर | (पु) |

| | | | |
|---|---|---|---|
| परश्वः | day after tomorrow | परसों (भविष्यत्काल) | (अ) |
| परह्यः | day before yesterday | परसों (भूत) | (अ) |
| परिणीतवान् | married | विवाह किया | (पु) |
| पालितपुत्रः | broughtup son | पोषित पुत्र | (पु) |
| पितामहः | father's father | दादा | (पु) |
| पितामही | father's monther | दादी | (स्त्री) |
| पितृव्यः | father's younger brother | चाचा | (पु) |
| पितृव्या | father's younger brother's wife | चाची | (स्त्री) |
| प्रपरश्वः | day after day after tomorrow | दो दिन बाद | (अ) |
| प्रस्थाय | after setting out | प्रस्थान करके | (अ) |
| प्रावारकम् | coat | कोट | (न) |
| फेनकम् | soap | साबुन | (न) |
| बुभुक्षा | hunger | भूख | (स्त्री) |
| भागिनेयः | sister's son | भानजा | (पु) |
| भागिनेयी | sister's daughter | भानजी | (स्त्री) |
| मशी | ink | स्याही | (स्त्री) |
| मातामहः | mother's father | नाना | (पु) |
| मातामहीः | mother's mother | नानी | (स्त्री) |
| मातुलः | mother'sbrother | मामा | (पु) |
| मातुलानी | mother'sbrother's wife | मामी | (स्त्री) |
| मोदकम् | a sweet dish | लड्डू | (न) |
| यन्त्रागारम् | factory | कारखाना | (पु) |
| लोकयानम् | bus | बस | (न) |
| वसतिगृहम् | lodging | आवास | (न) |
| वातावरणम् | atmosphere | वातावरण | (न) |
| विक्रेता | seller | बेचने वाला | (पु) |
| वित्तकोशः | bank | बैंक | (पु) |
| व्यञ्जनम् | curry | कढी | (न) |
| शिरस्त्रम् | cap | टोपी | (न) |
| श्वः | tomorrow | आगामी कल | (अ) |
| श्वशुरः | father-in-law | ससुर | (पु) |
| श्वश्रूः | mother-in-law | सास | (स्त्री) |
| सर्वत्र | everywhere | सब जगह | (अ) |
| सम्मार्जनी | broom | झाड़ू | (स्त्री) |
| सूच्यौषधम् | injection | इंजेक्शन | (न) |
| सेवकः | waiter | सेवक | (पु) |
| स्थानकम् | station | स्टेशन | (न) |
| स्नुषा | daughter-in-law | पुत्रवधू | (स्त्री) |
| स्वायत्तसंस्था | private company | निजी कम्पनी | (स्त्री) |
| ह्यः | yesterday | कल (भूतकाल) | (अ) |